# श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः

(ति.ति.दे.प्रोत्साहितः यु.जि.सि.द्वारा आमोदितश्च)



**आचार्य राणिसदाशिवमूर्तिः**
कुलपतिः




Ph: 0877 – 2222586

## पुरोवाक्

शेवधेरङ्कमिमं विदुषां करकमल उपायनीकुर्वन्मोदमधुरिममण्डितं मदीयं हृदयं ह्लादते वेदवेदाङ्गागमादिविद्यासु पूर्वजैर्निक्षिप्तानां ज्ञानवितरणशीलानां विकीर्णानां विषयाणां प्रत्यग्रं जिज्ञासुसमाजहितायोन्नयनं मनसि निधाय शेवधिरित्यन्वर्थेन नाम्ना षाण्मासिकी शोधपत्रिका 2009 तमे संवत्सरे समारभ्य अस्माभिः समाचाल्यते इत्येतदपरोक्षं प्रेक्षावताम्। एकादशरुद्राः इति हि श्रुतिः। तद्वत् सञ्चिकायामस्यां एकादशसंख्याकाः लेखा आदायिषत।

तत्रादौ **डा.भारतभूषणरथेन** विरचितः **"अभिज्ञानशाकुन्तलनाटके महाभारतस्य प्रभावः"** इति प्रबन्धः कालिदासग्रथिते नाटकेऽस्मिन् महाभारतश्लोकान् दृष्टान्तीकृत्य महाभारतस्य महत्वमपि बोधयतीति निरूपयति।

**डा.के.एल्.पवनकुमारमहाशयेन** आरचितः **"शास्त्रमाद्रियते सदा"** इति निबन्धः **काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्** इति न्यायमाधारीकृत्य शास्त्रस्य संरक्षणम्, सामाजिकप्रयोजनम् इत्यादीन् विशेषविषयान् प्रापञ्चयत्।

आचार्यः **डा.गिरिजाप्रसादषडङ्गी** "A Brief Description of Panchavimsha Brahmanam" इत्यस्मिन् स्वकीये प्रयत्ने शोधमूल्यभरिते पत्रे श्रौतोपात्तानि अग्निहोत्रदर्विहोम, अग्नीषोमीयपशु इत्यादीनि यज्ञतत्वानि उद्घाटयत्।

वैष्णवागमाः वेदमूलकाः विशिष्य वैखानसागमे **अष्टाङ्गयोगतत्त्वविचारः** उपलभ्यन्ते। श्री **डा.नारायणं वेङ्कट श्रीनिवासमूर्तिः "वैष्णवागमे योगतत्त्वविचारः"** इति शीर्षाङ्किते स्वशोधप्रबन्धे तच्छास्त्रोक्तान् विषयान् उपपादयत्।

वैदिकलोके प्रातिशाख्यानामध्ययनं नातिसुकरमथापि आयुष्मान् **डा.दीपक्शर्मा** **"वाजसनेयिप्रातिशाख्ये सन्ध्यप्राप्तवद्भावनिरूपणम्"** इति नामके स्वकीयशोधप्रबन्धे तृतीयाध्याये सन्धिप्रकरणे पदान्तपदाद्योः सन्धिः **"नपरकालः पूर्वकाले पुनः"** इत्यादीन् विषयान् विवेचनं कृत्वा सोदाहरणं तानि न्यरूपयत्।

**"अथातोऽध्यायोपाकरणम्"** इति सूत्रकारवाक्यं प्रमाणयन् श्रुतिस्मृत्यादि वाङ्मयोक्त **उपाकर्मकालनिर्वहणप्रकारविशदनपरः डा.अध्यक्षं वेङ्कटरामभरद्वाजः** व्यरचयत्। बह्वृचानाम् उपाकर्मकालविचारः इति नामकं प्रबन्धोऽयं धर्मशास्त्रज्ञानमुपबृंहति।

सूर्यप्रकाश ओझा समर्पितः **"सामवेदीय अग्निष्टोमस्य प्रवर्ग्यसामगानं विधिश्च"** इति नामाङ्कितः शोधप्रबन्धः श्रौतजिज्ञासून् वेदाध्ययनजिज्ञासूंश्च रञ्जयति।

**डा.बि.वि.श्रीनाथाचार्यः** प्रस्तुतः **"ऋग्विधानस्य लोकोपकारकत्वम्"** इति निबन्धः। तस्मिन्निबन्धे इष्टप्राप्त्यनिष्टपरिहाररूपलोकोपकारकत्वविशेषविषयादीन् विशेषेण व्यवृणोत्।

सामवेदाध्यापकः **अक्षय अशोक कुलकर्णी** प्रस्तुतः **"सामवेदीयवेदव्रतानां वैशिष्ट्यम्"** इत्याख्यः प्रबन्धः महानाम्नी व्रतवैशिष्ट्यान् तत्फलादींश्च विशदीकृत्य ग्रन्थस्य शोभाविष्करण-मातनोति।

**डा. चिर्रावूरि शिवरामकृष्णशर्म**महोदयेन विरचितः **त्रिपुरविमानम्** इति तॆलुगु निबन्धः वेदेषु विद्यमान वैज्ञानिकांशान् विशिष्य ऋग्वेदस्थ मन्त्रान् तथैव भरद्वाजमहर्षिप्रणोक्त वैमानिक शास्त्रांशान् स्वीकृत्य **त्रिपुररथवर्णनम्** इति विषयं श्रुतिस्मृत्यादि आख्यायिकोक्तवर्णनपुरस्सरं प्रपञ्चितः।

अन्तिमे **वाजसनेय प्रातिशाख्योक्तरीत्या व्यञ्जनानां पूर्वाङ्गपराङ्गनिरूपणम्** इति नामकोऽयं तॆलुगु निबन्धः **आराध्युल रमेश** महोदयेन प्रातिशाख्योक्तरीत्या स्वरमन्त्रोच्चारण विधिपुरस्सरम् अकार्षि।

इत्थं एकादश दलात्मकं ज्ञानपुष्पमिदं अखिलाण्डकोटिब्रह्माण्डनायकस्य श्रीनिवास स्वामिनः चरणयुगतले विद्वज्जनप्रीतये समर्प्यते॥

**आचार्य राणिसदाशिवमूर्तिः**

तिरुपतिः कुलपतिः

# विषयसूची

# अभिज्ञानशाकुन्तलनाटके महाभारतस्य प्रभावः

डा. भारतभूषणरथः*

**शोधपत्रस्य संग्रहरूपम् –**

भारतीयशास्त्रेषु पुराणानां स्थानं स्वतन्त्रम्। विस्तृतं पुराणवाङ्मयम्। अष्टादश पुराणानि तथा नैकानि उपपुराणानि शोभन्ते अस्मिन् वाङ्मये। तत्रापि विशेषतया महाभारतस्य स्थानं गुरुत्वमावहति। महाभारतस्य कथां स्वीकृत्य अनेके महाकवयः महाकाव्यानि लघुकाव्यानि च विरचितवन्तः। महाकवेः कालिदासस्य अभिज्ञानशाकुन्तलनाटकमपि महाभारतस्य दुष्यन्तप्रसङ्गे वर्तते। तमेव प्रसङ्गमाधारीकृत्य शोधपत्रस्यास्य विचारः।

**शोधपत्रस्य परिचयात्मकः उपक्रमः -**

**पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।**
**अद्यापि तत्तुल्यकवेरभावात् अनामिका सार्थवती बभूव ।।**

इत्ययं श्लोकः महाकवेः कालिदासस्य प्रशंसायां केनचित् महात्मना उक्तोऽस्ति । अस्य श्लोकस्य अर्थः एवं वर्तते यद् – कदाचित् प्रसिद्धकवीनां गणनां कर्तुं पण्डिताः उद्युक्ताः। गणनाप्रसङ्गे तत्रादौ कालिदासस्य गणना जाता। पण्डिताः कालिदासं कनिष्ठिकया अङ्गुल्या अगणयन्। तदनन्तरम् अनामिकायाः स्थानम् । अनामिकायाम् अर्थात् द्वितीये स्थाने कः कविः ग्राह्यो भवति इति पण्डिताः बहु(धा)वारं चिन्तितवन्तः। परन्तु कालिदाससदृशो न कोऽपि लक्षितः। अतः अद्यापि तत्सदृशः कविः न लब्धः इति कारणतः अनामिकानाम्न्याः अङ्गुल्याः नामसार्थक्यं जातम्। कालिदासः सम्प्रति विश्ववन्द्यः। तस्य एतादृशी प्रसिद्धिः किमर्थमिति यदा

**"Shevadhih"**, Research Journal of Sri Venkateswara Vedic University, Tirupati. ISSN: 2229-4031, Email: shevadhih@gmail.com Vol-13, 1st & 2nd issues - January to December 2021, Vol-14, 1st & 2nd issues - January to December 2022, Pages.1-10.

* सहाचार्यः, साहित्यविभागः, राष्ट्रियसंस्कृतविश्वविद्यालयः – तिरुपतिः, मोबाइल – 8897426243

विचारयामः तदानीं तस्य कृतयः सर्वादौ दृष्टिपथमायान्ति। यतः कालिदासस्य नाम-गोत्र-जन्मस्थान-पिता-माता तथा सर्वमपि परिचयात्मकं तत्त्वं कालगर्भे अस्ति। न कोऽपि स्पष्टतया वक्तुं शक्नोति कालिदासस्य परिचयम्। अतः सोऽयं कालिदासः केवलं स्वकविप्रतिभया एव विश्वप्रसिद्धः।

कालिदाससाहित्यावगाहनसमये परिलक्षते यद् अयं कविः वहुधा पुराणवर्णितविषयं स्वबुद्ध्या स्वतन्त्रतया उपस्थापयति इति।विश्वनाथकविराजप्रभृतिभिः आलङ्कारिकैः साहित्यदर्पणेत्यादिषु ग्रन्थेषु उक्तम् यद् – **नाटकं ख्यातवृत्तं स्यात्।**।[1] अर्थात् नाटकं सर्वथा प्रख्यातम् इतिवृत्तमाधारीकृत्य भवेदिति। अपि च महाकाव्यलक्षणनिरूपणावसरे उक्तं यद् – **इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्।**।[2] अर्थात् महाकाव्यचरित्रं रामायणमहाभारतादिमूलकं इतिहासोद्भवं शिष्टजनाधारं वा भवेत्। आलङ्कारिकाणाम् एतल्लक्षणम् अवश्यं कालिदासादीनां प्रसिद्धकवीनां प्रयोगकौशलं दृष्ट्वा निरूपितमस्ति। यतः महाकवेः कालिदासस्य प्रायः सर्वासु रचनासु पौराणिकं चरित्रं वर्तते एव। तत्रापि विशेषतया रघुवंशमहाकाव्ये रामायणस्य चरित्रं तथा कुमारसम्भवमहाकाव्ये शिवपुराणस्य चरित्रं प्रस्फुटितमस्ति। एवमेव अभिज्ञानशाकुन्तलनाटके महाभारतस्य तथा पद्मपुराणस्य प्रसङ्गः। मेघदूत-विक्रमोर्वशीय-मालविकाग्निमित्रप्रभृतिषु कृतिष्वपि पुराणवाङ्मयस्य छाया प्रत्यक्षरूपेण परोक्षरूपेण वा द्रष्टुं शक्यते। तत्रापि विशेषतया पौराणिकसन्दर्भोपस्थापनायाम् अभिज्ञानशाकुन्तलनाटकस्य वैशिष्ट्यं सहृदयहृदयं विशेषतया हरति।

**शोधपत्रस्य परामर्शः -**

अभिज्ञानशाकुन्तलनाटकस्य मङ्गलपद्ये भगवतः शिवस्य वन्दनं कृत्वा कालिदासः वैदिकं देवं शिवं स्तौति। स च शिवः विविधपुराणेषु वहुधा वन्द्यो भवति। विशेषतया भारतीयशास्त्रेषु

वर्णितानि अष्टप्रमुखानि तत्त्वानि कालिदासः। अष्टसंख्याकाभिः तनुभिः सेवितः शङ्करः इति कालिदासस्य अभिप्रायः। ताः अष्ट शक्तयः भवन्ति – 1. जलम्, 2. हविः (घृतादि देवार्पितं भोज्यम्), 3. अग्निः, 4. होत्री (यजमानरूपा हवनकर्त्री) 5. कालरूपः सूर्यः 6. कालरूपः चन्द्रः 7. शब्दगुणः आकाशः तथा 8. पृथिवी। अतः कविः लिखति –

**या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री**
**ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।**

**यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः**
**प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः।।**[3]

एताः अष्ट शक्तयः पुराणेषु बहुधा वर्णिताः सन्ति। अतः नाटकस्य प्रारम्भतः पुराणशास्त्रस्य सम्मान्णं कृत्वा नाटकान्तपर्यन्तं कविः कालिदासः विविधपुराणतत्त्वं स्वनाटके उपस्थापयति। तत्रापि राज्ञः दुष्यन्तस्य चरित्रं महाभारते तथा पद्मपुराणे प्राप्यते। परन्तु अभिज्ञानशाकुन्तलनाटकस्य अध्ययनेन ज्ञायतेयत् अस्य नाटकस्य इतिवृत्तं महाभारतस्य आदिपर्वणि वर्तते इति। आदिपर्वणः अन्तर्गततया सम्भवपर्वणि ऋषिः वैशम्पायनः राज्ञः जनमेजयस्य पुरतः प्रतापशालीनः राज्ञः दुष्यन्तस्य वृत्तान्तं श्रावयति। एतदेव इतिवृत्तं महाभारतात् स्वीकृतवान् कालिदासः परन्तु सम्पूर्णे नाटके स्वनाट्यप्रतिभया विषयं प्रतिपादयति कालिदासः। तत्रैव कालिदासस्य विश्वकविः इति बिरुदः सिध्यति। पौराणिकमपि विषयं नूतनमिव प्रतिपादने नान्यः कालिदासाद् भिन्नः कोऽपि वर्तते संस्कृतसाहित्याकाशे। समकालीनसमाजस्य वास्तवं चित्रं संघटयति कालिदासः। किं वा दुष्यन्तशकुन्तलयोः चरित्रचित्रणे अपि च धीवरस्य तथा राजकर्मचारिणां चरित्रचित्रणसमये अपि कालिदासः साम्प्रतिकं समयं तथा समयानुसारं लोकव्यवहारं प्रतिपादयति। अतः पौराणिकविषयः अपि अत्र नूतनविषय इव प्रतिभाति। यद्भवतु नाम। अभिज्ञानशाकुन्तलपठनसमये महाभारतस्य महत्वम् अस्माभिः न विस्मर्तव्यं भवति।

महाभारते जनमेजयः वैशम्पायनम् अपृच्छत् – शकुन्तलायाः उत्पत्तिः तथा दुष्यन्तेन सह शकुन्तलायाः विवाहप्रकारं श्रोतुमिच्छामि कृपया अभिवर्णय इति।

महाभारते यथा–

**संभवं भरतस्याहं चरितं च महामते।**
**शकुन्तलायाश्चोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः।।**

**दुष्यन्तेन च वीरेण यथा प्राप्ता शकुन्तला।**
**तं वै पुरुषसिंहस्य भगवन्विस्तरं त्वहम्।।**
**श्रोतुमिच्छामि तत्त्वज्ञ सर्वं मतिमतां वर।**[4]

जनमेजयः ज्ञातवान् यद् भरतवंशोत्पन्नः दुष्यन्तः महान् वीरः आसीत्। स च पुरुषसिंहः दुष्यन्तः शकुन्तलां परिणीतवान्। या शकुन्तला कण्वपुत्री आसीत् अपि च परमसौभाग्यवती आसीत् इति। जनमेजयस्य आग्रहं दृष्ट्वा वैशंपायनः महाराज्ञः दुष्यन्तस्य चरित्रम् अवर्णयत्।

एकदा प्रभूतबलवाहनः दुष्यन्तः गहनं वनं प्रविष्टवान्। तत्र वने व्याघ्रसिंहप्रभृतयः अनेके हिंस्रजन्तवः आसन्। दुष्यन्तः स्वसायकैः बहून् व्याघ्रगणान् पातयामास। तत्र महाभारतस्य वनवर्णनम् अत्यन्तं भयङ्करं भाति। यथा –

**स कदाचिन्महाबाहुः प्रभूतबलवाहनः।।**
**वनं जगाम गहनं हयनागशतैर्वृतः।**[5]

**विषमं पर्वतस्रस्तै रश्मिभिश्च समावृतम्।**
**निर्जलं निर्मनुष्यं च बहुयोजनमायतम्।।**

**मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः।**
**तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः।।**

**लोडयामास दुष्यन्तः सूदयन्विविधान्मृगान्।**
**बाणगोचरसंप्राप्तांस्तत्र व्याघ्रगणान्बहून्।।**

**पातयामास दुष्यन्तो निर्बिभेद च सायकैः।**[6]
**केचित्तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः।**
**केचिदग्निमथोत्पाद्य संसाध्य च वनेचराः।।**

**भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा।**
**तत्र केचिद्गजा मत्ताः बलिनः शस्त्रविक्षताः।।**[7]

एवं महाभारते भीषणं वनं, व्याघ्र-सिंह-गज-प्रभृतयः भयङ्करवन्यपशवः, मांसभक्षणतत्पराः वनेचराः, तथा वनस्य विविध भयङ्करं चित्रं च द्रष्टुं शक्यते। एवं महाराजदुष्यन्तः मृगसहस्राणि हत्वा यदा वनान्तर्वर्तिप्रदेशं प्रविशति तदानीं मालिनीनद्याः तटे एकम् आश्रमं पश्यति। स च आश्रमः महर्षेः काश्यपस्य आश्रमः।

तद् वर्णनं यथा –

**प्रेक्षमाणे वनं तत्तु सुप्रहृष्टविहङ्गमम्।**
**आश्रमप्रवरं रम्यं ददर्श च मनोरमम्।।**

**नानावृक्षसमाकीर्णं सम्प्रज्वलितपावकम्।**
**तं तदाऽप्रमितं श्रीमानाश्रमं प्रत्यपूजयेत्।।**

**यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम्।**
**अग्न्यगारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम्।।**

**महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च।**
**मालिनीमभितो राजन्नदीं पुण्यां सुखोदकाम्।।**[8]

**अतीव गुणसम्पन्नमनिर्देश्यं च वर्चसा।**
**महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम्।।**

**ध्वजिनीमश्वसम्बाधां पदातिगजसंकुलाम्।**
**अवस्थाप्य वनद्वारि सेनामिदमुवाच सः।।**

**मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम्।**
**काश्यपं स्थीयतामत्र यावदागमनं मम।।**[9]

इतः ज्ञायते राजा दुष्यन्तः अरण्ये मृगप्रभृतीनां वन्यजन्तूनां वधं कृत्वा अग्रे सरति। तदानीं पक्षिगणाकीर्णे मनोरमे अरण्यप्रदेशे स राजा एकां नदीं पश्यति। सा च नदी मालिनी इति नाम्ना प्रसिद्धा आसीत्। नद्याः तटे महर्षेः कण्वस्य आश्रमः। अयं च महर्षिः कश्यपऋषेः पुत्रत्वात् काश्यप इति नाम्ना प्रसिद्धः। दुष्यन्तः स्वसैन्यं वनद्वारि अवस्थाप्य तपोधनं काश्यपं द्रष्टुं गच्छति।

यदि अभिज्ञानशाकुन्तलनाटकस्य प्रारम्भं चिन्तयामः तर्हि तत्रापि प्रस्तावनायाः अनन्तरं राजा दुष्यन्तः मृगयार्थं वनं प्रविशति। रथारूढो दुष्यन्तः सूतेन सह स्वसैन्यबलं एकं मृगशिशुं लक्षीकृत्य घोरवनं प्रविष्टवान्। बहुदूरं यदा सः गतवान् तदानीं द्वौ ऋषिशिष्यौ तत्र समागतवन्तौ **आश्रममृगोऽयं न हन्तव्यो न हन्तव्यो** इति विनिवेदयतः। तदा दुष्यन्तः स्थिरो जातः। घनारण्ये ऋषिकुमारयोः दर्शनं कृत्वा रथादवतीर्य सविनयं प्रणामं करोति दुष्यन्तः। तत्र तेन ज्ञायते एतौ ऋषिशिष्यौ महर्षेः कण्वस्य शिष्यौ।

महाकविकालिदासकृत वर्णनायां यद्यपि महाभारतस्य प्रभावः वर्तते तथापि कालिदासस्य वर्णनाचातुर्यं सहृदयहृदयङ्गमं भवति। कालिदासः वनस्य सौन्दर्यं रमणीयरूपेण वर्णयति परन्तु महाभारते भयङ्करं वनं वर्णितमस्ति। कालिदासस्य लेखनी दुष्यन्तं दयालुराजरूपेण चित्रयति।

यतः वने एकं मृगमनुधावनं कृत्वा यदा ऋषिशिष्ययोः सकाशाद् श्रृणोति यद् स च मृगः आश्रममृगः इति तदा दुष्यन्तः स्वधनुः अधः स्थापयति। वैखानसवाक्यं श्रुत्वा झटिति दुष्यन्तः धनुषः अधः संस्थाप्य कथयति – **एष प्रतिसंहृतः**। परन्तु महाभारते दुष्यन्तः बलशालिराजरूपेण चित्रितः। अतः वने मृग-सिंह-व्याघ्रप्रभृतीनां वधं कृत्वा राज्ञः वीरत्वं प्रकटयति महाभारतकारः। अपरत्र कालिदासः वनसुरक्षा तथा वन्यप्राणिनां सुरक्षाविषये जागरूको भवति। अत्र कारणं भवति महाभारतकालः तथा कालिदासस्य समययोः दीर्घ अन्तरः वर्तते। कालिदासः जानाति स्म यदि इतः आरभ्य वनसुरक्षायै प्रयासो न भवति तर्हि समाजस्य दुर्दिनम् अचिराद् आगमिष्यति। महाभारतकाले वन्यहिंस्रजन्तूनां प्राबल्यत्वात् जनजीवनं भीतत्रस्तम् आसीत्। वन्यजन्तूनां सकाशात् स्वपरिवारस्य सुरक्षां कर्तुं जनानां पार्श्वे अस्त्रं शस्त्रं च नासीत्। अतः वीरपुरुषाः स्वास्त्रप्रयोगं कृत्वा वन्यजन्तून् वधं कृत्वा साधारणजनानां जीवनं रक्षन्ति स्म। परन्तु स च कालः कालिदासस्य समये नास्ति। शनैः शनैः अरण्यं क्षीयमाणम् आसीत्। अतः वनसुरक्षायै कालिदासकृतिषु सर्वत्र उपदेशः वर्तते।

कालिदासस्य वर्णनायाम् अपरम् एकं वैशिष्ट्यं भवति अयं कविः स्वनाट्यकौशलप्रयोगपूर्वकं पुराणम् इतोपि लोकादृतं करोति। विविधछन्दसां प्रयोगपूर्वकं पुराणस्य तथ्यं सरससुन्दररूपेण च उपस्थापयति कविः। यदा दुष्यन्तः अरण्यं प्रविशति तदा उपरोक्तं महाभारतीयं वर्णनं कालिदासः स्वशैल्या सुन्दरं करोति। उदाहरणरूपेण दुष्यन्तस्य वनप्रवेशं स्वीक्रियते। यत्र मृगस्य स्वभाववर्णनं वर्तते। तत्रारम्भे नटी गीतं गायति।

यथा –

**ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि।**
**अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि।।** [10] **- इति।**

गीतं श्रुत्वा सूत्रधारः नटीं कथयति – मनोहरेण त्वदीयेन गीतरागेण मम मनः हारितमस्ति। यथा नृपः दुष्यन्तः चित्राङ्गेण हरिणेन बलात् हृतः अस्ति। अपि च राजानं मृगं चावलोक्य सूत्रधारः दुष्यन्तं पिनाकधनुर्धारी शिवः इति सम्बोधयति।

यथा –

**कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके।**
**मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम्।।**[11]

मृगस्य चञ्चलस्वभावं वर्णयित्वा दुष्यन्तः सूत्रधारम् अवदत् –

**ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः**
**पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।**

**दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति।।** [12]

एवं मृगानुसारी राजा यदा ऋषिशिष्यमुखाद् श्रृणोति अयम् आश्रममृगः इति तदानीं राजा मृगवधकार्याद् निवृत्तो भवति। वैखानसमुखेन कालिदासः वनसुरक्षायै वन्यप्राणिनां च सुरक्षायै उपदिशति समाजम्। यथा –

**न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्**
**मृदुनि मृगशरीरे पुष्पराशाविवाग्निः।**

**क्व बत हरिणकानां जीवितं चातिलोलं**
**क्व च निशितनिपाताः वज्रसाराः शरास्ते।।**

**तत्साधु कृतसंधानं प्रतिसंहर सायकम्।**
**आर्त्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि।।** [13]

एतदनन्तरं दुष्यन्तवैखानसयोर्मध्ये सम्भाषणावसरे दुष्यन्तः ज्ञातुं प्रभवति यद् पुरतो दृश्यमानः आश्रमः महर्षेः कण्वस्य आश्रमः इति। यतः वैखानसः दुष्यन्तम् आश्रमपरिदर्शनाय निमन्त्रयति। तत्र महाभारतोक्ता मालिनीनदी अपि वर्णिता अस्ति। तद् यथा –

**वैखानसः** – राजन् समिदाहरणाय प्रस्थिता वयम्। एषः खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्यातिपातः प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः। [14]

एवंप्रकारेण महाभारतस्य दुष्यन्तप्रसङ्गमानीय महाकविः कालिदासः स्व-अभिज्ञानशाकुन्तलं नाटकं सरसं सुन्दरं च करोति। तदनन्तरं शकुन्तलया सह दुष्यन्तस्य सम्पर्कः, विवाहः तथा विविधविषयाणां वर्णने कालिदासस्य स्वकीयप्रतिभावैशिष्ट्यं परिलक्षते। विशेषतया शकुन्तलां प्रति महर्षेः दुर्वासस्य अभिशापवृत्तान्तः कालिदासस्य स्वकीयं बुद्धिवैशिष्ट्यम्। यद्यपि नाटकम् इतोपि चमत्कारजनकं भाति। एवं नाटकस्य आरम्भतः अन्तं पर्यन्तं महाकविः कालिदासः पुराणतत्त्वमेव सम्मानयति। महाकवेः कालिदासस्य सर्वगुणसम्पन्नत्वम् अभिज्ञानशाकुन्तलनाटके एव परिलक्ष्यते। अतः साधु उक्तम् - कालिदासस्य सर्वस्वम् अभिज्ञानशाकुन्तलम्।

* * *

## पादटीका -

1. सा.द – 6परिच्छेदः, 7कारिका
2. सा.द – 6परिच्छेदः, 381कारिका
3. अ.शा – 1.1
4. महा. आदि. संभव. 1-2
5. महा. आदि. संभव. 3-4

6. महा. आदि. संभव. 18-21
7. महा. आदि. संभव. 28-29
8. महा. आदि. संभव. 18-21
9. महा. आदि. संभव. 31-33
10. अ.शा – 1.4
11. अ.शा – 1.6
12. अ.शा – 1.7
13. अ.शा – 1.10-11
14. अ.शा – 1. 12-13

**संकेताक्षरसूची –**

1. अ.शा – अभिज्ञानशाकुन्तलम्
2. महा – महाभारतम्
3. सा.द - साहित्यदर्पणम्

**पुस्तकसूची -**

1. अभिज्ञानशाकुन्तलम् – महाकविः कालिदासः – व्याख्या, सुबोषदन्द्र पन्त – मोतीलालबनारसीदासः – वाराणसी – 2009.
2. साहित्यदर्पणः – विश्वनाथकविराजः – व्याख्या, शेषराजशर्मारेग्मी - चौखम्बाकृष्णदास-अकादमी – वाराणसी – 2010.
3. महाभारतम् – ओरिएण्टाल बुक् रिप्रिण्ट कर्पोरेसन् – नवदेहली – 1979.

# शास्त्रमाद्रियते सदा

**डा.के.एल्.पवनकुमारः***

महदिदं नः प्रमोदस्थानं यत् भारतं समस्तप्रपञ्चस्य विश्वविद्यालयस्थानं भजत् विश्वे विद्योतत इति। न केवलं महाभारतग्रन्थे एव महाभारतत्वम्, अपि त्वस्माकं भारतदेशेऽपि। अत्र महत्वं भारवत्वं च संस्कृतदृष्ट्या संस्कृतिदृष्ट्या समाजदृष्ट्या वा चकास्ते। महत्वात् भारवत्वात् खलु महाभरतमुच्यते। संस्कृत-संस्कृति-समाजादीनां मूलं भवति शास्त्रम्। यत्तु वेदमूलकं सद्भिराचरणीयं तच्छास्त्रम्। नान्यत्। यतो हि केचन स्वबुद्ध्या जनान् वञ्चयित्वा यत्किमपि लिखितं प्रदर्शयन्तः शास्त्रस्यापमानं कुर्वन्ति। एतादृशैः रचितं दर्शितं वा अक्षरनिवहं शास्त्रपदवीं नाधिरोहति। ते वञ्चकाः नूनं निरयं यान्ति यावदाचन्द्रतारकम्।

तदुक्तं पद्मपुराणे -

**स्वबुद्धिरचितैः शास्त्रैर्मोहयित्वा जनं नराः।**
**तेन ते निरयं यान्ति युगानां सप्तविंशतिम् ।। इति।।**[1]

मायिनामतिबाहुल्यात् सच्छास्त्रज्ञानमतिकष्टसाध्यम्। तदर्थं किं नाम शास्त्रम्? कतिविधं च तत् ? कानि च तानि विधानि ? कश्च शास्त्रमहिमा? शास्त्रं किं किं बोधयति ? कैः रचितम् ? किं तस्य प्रयोजनम् ? मानवजीवने शास्त्रस्य का आवश्यकता? तद्विना जीवनं कथम्? कथं वा तस्य संरक्षणम्? किं किं तस्य विनाशने कारणम् ? शास्त्रसंरक्षणे केषां केषां योगदानमपेक्षते ? संरक्षणे के के उपायाः? इत्याद्यंशाः किञ्चिद्विचार्यन्ते ।

**"Shevadhih"**, Research Journal of Sri Venkateswara Vedic University, Tirupati. ISSN: 2229-4031, Email: shevadhih@gmail.com Vol-13, 1st & 2nd issues - January to December 2021,
Vol-14, 1st & 2nd issues - January to December 2022, Pages.11-27.

* अतिथि-अध्यापकः। संस्कृतविभागः। श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः। तिरुपतिः। दूरवाणी - 7702254180.

किं नाम शास्त्रम् ? इत्युक्ते - **प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**

**पुंसां येनोपदिश्यन्ते तच्छास्त्रमभिधीयते ।।**[2] शब्दार्थचिन्तामणिः

श्लोकान्तरेऽपि - **शासनात् शंसनाच्छास्त्रं शास्त्रमित्यभिधीयते।**

**शासनं द्विविधं प्रोक्तं शास्त्रलक्षणवादिभिः।।**[3]

शास्त्रपदस्य द्वौ अर्थौ विद्येते शासनं शंसनं चेति। शासनमपि द्विविधं प्रवृत्तिः निवृत्तिर्वा। शासनार्थे शास्त्रं क्रियाप्रेरकम्। अतः पुरुषायत्तम्। शंसनार्थे शास्त्रं ज्ञानपरम्। अतः वस्तुतन्त्रम्।

शिष्यते अनेन इति शास्त्रम्। शास्तीति शास्त्रम्। शासनात् शास्त्रम्। शासु अनुशिष्टौ, तथा शन्सुँ स्तुतौ इत्येताभ्यां धातुभ्यां निष्पन्नः शास्त्रशब्दः। शिष्यते अनुशिष्यते अपूर्वार्थो बोध्यते अनेनेति शास्त्रं वेद एव। शास्त्रशब्दप्रयोगः वेदोपजीविषु स्मृतिपुराणागमादिषु, एकप्रयोजनोपनिबद्धे अशेषार्थप्रतिपादके ग्रन्थजाते च प्रयुज्यते। एवं छन्दोव्याकरणाभिधान-कोशकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थाः शास्त्राणि भवन्ति। यद्धितानुशासनं बोधयति तच्छास्त्रम्। लोकहिताय उत्तमपथप्रदर्शकं शास्त्रम्। मानवानां कृते एव शास्त्रम्। न तु पशुपक्षिप्राणिनां कृते। न सर्वं शात्स्त्रं न सर्वैः अधिगन्तुं शक्यम्। अर्थात् कैश्चिद् किञ्चिदिति।

अत एवोक्तं वह्निपुराणे –

**इदं ज्ञेयमिदं ज्ञेयं यः सर्वं ज्ञातुमिच्छति ।**

**अपि वर्षशतेनापि शास्त्रान्तं नाधिगच्छति ।।** इति।।[4]

शास्त्रसारस्तु सर्वैरवाप्तुं शक्यः। तथा च साङ्ख्यग्रन्थे -बहुशास्त्रालोढनेऽपि[5] **सारादानं षट्पदवदिति सांख्यप्रवचनसूत्रात्।** (4-13)**सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः इति स्मृतेश्च**[6]**।**

**शास्त्रोत्पत्तिः** – मत्स्य उवाच –

**तपश्चचार प्रथमममराणां पितामहः। आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः।।**

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। नित्यशब्दमयं पुण्यं शतकोटिप्रविस्तरम्।।**

**अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः। मीमांसान्यायविद्याश्च प्रमाणं तर्कसंयुताः।।**

**वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः। मनसः पूर्वसृष्टा वै जाता ये तेन मानसाः[7]।।**

इति ।।

**शास्त्रोद्देश्यम्** – समाजस्य हितमनुशासयत् प्रत्यक्षपरोक्षरूपेण प्राणिपशुपक्षिमानव-समुदायं प्रति दुःखनिवृत्तिद्वारा सुखप्रदानं मुख्योद्देश्यम्। शास्त्रोक्तकर्म कर्तव्यं न तु शास्त्रविरुद्धकम् इति तात्पर्यार्थः।

**श्रुतिस्मृतिसदाचारविहितं कर्म केवलम्। सेवितव्यं चतुर्वर्णैर्भजद्भिः केशवं सदा।।**

**अन्यथा निरयं यान्ति कुमार्गागमसेवनात्। अतो वेदविरुद्धार्थं शास्त्रोक्तं कर्म सन्त्यजेत्[8]।।**

**शास्त्रविभागः**– तच्छास्त्रं त्रिविधं प्रोक्तं सात्विकादिविभेदतः।

तदुक्तं देवीभागवते –

**सात्विकं तत्र वेदान्तो मीमांसा राजसं मतम् ।**

**तामसं न्यायशास्त्रं च हेतुवादाभियन्त्रितम्[9]** । इति ।।

**शास्त्रमहिमा, तत्प्रयोजनञ्च**–

**अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्।**

**सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः[10]।।**

अनेकसंशयानां परिहारं वयं शास्त्रे द्रष्टुं शक्नुमः। पदार्थं परोक्षतया दर्शयति शास्त्रम्। जगतो नेत्रं भवति शास्त्रम्। यस्य शास्त्रं नास्ति स तु अन्ध एव।

**विद्या शस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये।**

**आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा[11] ।।**

**निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः।।**[12]इत्यमरसिंहोक्तदिशा आज्ञार्थे, ग्रन्थे च शास्त्रपदप्रयोगो दृश्यते। शास्त्रमिदं वृध्दाप्येऽपि पर्वतवत् स्थिरं सत् सर्वदा गौरवं वर्धयते। शस्त्रं तावत् वृद्धाप्ये हास्याय कल्पते। व्ययतो वृद्धिमायाति शास्त्रम्। सञ्चयात् क्षयमाप्नोति। शास्त्रं मानवस्य शुद्धबुद्धिप्रदाने मुख्यपात्रं वहति। शास्त्रजन्या शुद्धा बुद्धिः किल कामधेनुः। सा तु श्रियः प्रदुग्धे। विपदो रुणद्धि। यशांसि सूते। मलिनं प्रमार्ष्टि। श्रेष्ठमपि पुरुषं संस्कारशौचेन पुनीते। अतः किं किं न साधयति शास्त्रम्[13]। सर्वं साधयतीत्यर्थः।

**शास्त्रं किं किं बोधयति** इत्युक्ते उत्तरं भवति यत् –

शास्त्रं तावत् मानवमुद्दिश्य वैदिकं लौकिकं च बोधयति। वैदिकं किं बोधयतीति स्थालीपुलाकन्यायेन पश्यामः ।

**श्रुतिस्मृतिसदाचारविहितं कर्म शाश्वतम्।**
**स्वं स्वं धर्मं प्रयत्नेन श्रेयोऽर्थीह समाचरेत्।। इति पाद्मे[14]।।**

**कुरु भुङ्क्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततम्।**
**हरिरेव परो हरिरेव गुरुः हरिरेव जगत्पितृमातृगतिः ।। इति[15]।।**

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि [16]।।**

**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः[17]।**
**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।**

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः[18]।।**

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत।।**

**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ !।**
**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत[19]!।। इति।**

**तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे[20]।।**

**श्रद्धावान् लभते ज्ञानम्[21]। शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा।**
**मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम्[22]।**

इत्यादिगुह्यतत्वानि वैदिकानि बोधयति शास्त्रम्, इति सुस्पष्टं ज्ञातम्।

तथैव लौकिकं पश्यामश्चेत् - **क्षणशः कणशश्चैव विद्यामर्थं च साधयेत्।**
**क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम्[23]।।**

**अपरिणामोपशमो दारुणो लक्ष्मीमदः[24]। गर्भेश्वरत्वम् अभिनवयौवनत्वम् अप्रतिमरूपत्वम् अमानुषशक्तित्वं चेति महतीयं खल्वनर्थपरम्परा[25]। सा विद्या या विमुक्तये[26]।**

**कपिरपि च कापिशायनमदमत्तो वृश्चिकेन सन्दष्टः ।**
**अपि च पिशाचग्रस्तो किं ब्रूमो वैकृतं तस्य[27]।।**

**गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः[28]।।**

**युक्तियुक्तं वचो ग्राह्यं बालादपि शुकादपि।**
**युक्त्ययुक्तं वचस्त्याज्यं वृद्धादपि शुकादपि[29]।।**

**न कश्चिदपि जानाति किं कस्य श्वो भविष्यति।**
**अतः श्वकरणीयानि कुर्यादद्यैव बुद्धिमान्[30]।।इत्यादि ।**

शास्त्रमिदं कैः कैः रचितम् – इत्यस्य उत्तरं शैवपाशुपतादिशास्त्राणामुत्पत्तिप्रदर्शनेन गन्धर्वतन्त्रे उक्तमस्ति -

यत् -

**प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम्।**
**मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानि ततः परम्।।**

**काणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत्।**
**गौतमेन तथा न्यायं साङ्ख्यं तु कपिलेन हि ।।**

**धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम्।**
**दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ।**

**बौद्धशास्त्रं तथा प्रोक्तं नग्ननीलपटादिकम्[31]।।**

विखनोमहर्षिणा वैखानसागमशास्त्रम्। वेदव्यासेन वेदान्तशास्त्रम्। वात्सायनेन कामशास्त्रम्। नारायणेन तन्त्रशास्त्रं रचितम्। एवमेव शास्त्रकर्तारो बहवो भवन्ति।

**शास्त्रविनाशने कारणानि–**

1. शास्त्रस्य प्राचीनपद्धत्या पाठप्रवचनाभावः ।
2. शिष्यचित्तापहारकगुरोरभावः ।
3. योग्यशिष्याणामभावः ।
4. योग्यानां शास्त्रे अप्रवृत्तिः ।
5. अयोग्यानां शास्त्रे प्रवृत्तिः ।
6. सामाजिकानां शास्त्रे अनादरप्रदर्शनम् ।
7. गुरुशिष्ययोर्मध्ये प्रेमसम्बन्धाभावः ।
8. विश्वविद्यालयादिषु शास्त्रविभजनपूर्वकम् अध्यापनेन अन्यशास्त्राणां ज्ञानाभावः छात्रेषु दरीदृश्यते । उदा – साहित्याचार्यच्छात्रस्य सामान्यव्याकरणतर्कज्ञानाभावात् स्वशास्त्रे तलस्पर्शिज्ञानप्राप्तौ असमर्थता।

9. विश्वविद्यालयेषु अवधिपद्धत्या शास्त्रपठनं पाठनञ्च ।

10. अस्माकं दौर्भाग्यं यत् प्राचीनपद्धत्या प्रचाल्यमानासु संस्थासु, विद्यापीठेषु च इदानीन्तनविश्वविद्यालयपद्धतिमानीय शास्त्रपाठनस्य सीमां कल्पितवन्त इति। एतदपि शास्त्रनाशने मुख्यं बीजं भवति।

11. **सर्वे गुणाः काञ्चनमाश्रयन्ति** इत्युक्तदिशा न केवलं सामान्यजनानां चित्तं धने लग्नम्, अपि तु बहुशः शास्त्रवेत्तृणामध्यापकानामपि इति अनिवार्या स्थितिः।

12. शास्त्रं पठितुम् आगतानां शिष्याणामपि चित्तं धनेऽसंलग्नमिति वक्तुं न शक्नुमः । तत्र सतर्कानि वा वितर्कानि वा कारणानि अनेकानि स्युः।

13. शास्त्रमतसम्प्रदायसंरक्षकानां नैकेषां यतीनां पीठाधिपतीनां शरणानां साधुसज्जनानां मनः वित्ते, व्यापारे संलग्नं सत्, पूर्वकालीनगुरुवर्याणामिव सम्प्रदायशास्त्रसंरक्षणेऽसंलग्नमिति, तेषाम् अपूर्वानुभव-पूर्वकोत्तरदायित्वाभावोऽपि शास्त्रनाशने मुख्यं कारणम्।

14. प्रायशः केचन विद्यार्थिनः प्रमाणपत्रायत्तचित्ताः सन्ति। छात्राणामीदृशं बुद्धिपरिवर्तनं शास्त्रनाशने अपरं कारणम्।

15. सर्वकारस्य पूर्णतया प्रोत्साहाभावः ।

16. पण्डितेषु विद्यमानोऽहङ्कारः तथा पण्डितानां मात्सर्यम्।

17. पण्डितपरम्परागतमूर्खाणाम् अविवेकता। यया शास्त्रग्रन्थानामपूर्वाणां तालपत्रादीनां नाशः, तेन च शास्त्रनाशः।

18. पाश्चात्यजीवनपद्धतौ आविर्भूता रतिः संस्कृतिसंस्कृतसमाजानां मूलरूपं शास्त्रम् उच्छिन्नं करोति। एतदपि शास्त्रनाशने अन्यतमं कारणम्।

19. **सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।**
**सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाग्भवेत्**[32]।। इति,

प्राचीनानामिव विशालहृदयाभावश्शास्त्रनाशने कारणम्।

यतो हि मनुष्यस्य सुखित्वं निरामयत्वं मङ्गलदर्शनत्वं दुःखाभात्त्वं च सर्वं शास्त्रमूलकम्। एतादृशविशालभावना यदि मनुष्ये स्यात् तर्हि सः सुखसाधनं शास्त्रं जगते समर्प्य स्वशास्त्रकोशवृद्धिं करोति खलु। अनेन ज्ञायते यत् शास्त्रस्य स्थितिः मानवेषु मानवसमाजेषु च अधःपतनस्थित्यां वर्तत इति।

**मानवजीवने शास्त्रस्य आवश्यकता -**

शास्त्रस्य मानवजीवने महती आवश्यकता वर्तते। यतोहि तद्विना मानवस्य जीवनम् अतीव दुःखकरम्। इदानीन्तने एकविंशतितमे शतमाने विविधरङ्गेषु यशस्विनां परिणामकारिसंशोधनानां प्रबलप्रभाववशात् मानवः "**आत्मानं**" स्वयं पूर्णः इति भ्रान्तः, स्वप्नेषु विहरन् दरीदृश्यते। आध्यात्मिकपवित्रभावनाः शिथिलीकृताः। जीवनपथे पावित्र्यं नास्ति। केवलं क्षुद्रविषयभोगप्रधानं लौकिकम् उद्दिश्य मानवस्य मनः प्रवृत्तम्। नाटकाभिनयवत् दृश्यमानानां बाह्यभौतिकपदार्थानां भोगविलाससाधनानां रूपलावण्यसौन्दर्यैः मोहितः बौद्धिक-नैतिकाध्यात्मिकभावनाशून्यां स्थितिं प्राप्नुवन्नस्तीति यत् तच्छोचनीयम्।

अचेतनसाम्राज्याधीनो भूत्वा अधुनातनयान्त्रिकयुगस्य अतिनागरिकतायाश्च विषयसुखपाशैः बद्धः निर्जीवयन्त्रशक्त्या, विपुलया सम्पदा, शक्तिसामर्थ्यवैभवैः सुसम्पन्नोऽपि असन्तृप्त्या क्षुब्धो दरीदृश्यते। यतोहि अस्य तृप्तिर्नास्ति शान्तिश्च। नित्यनिरन्तरशाश्वतसुखस्य चिन्तनमेव नास्ति। कापि भीतिः, भ्रान्तिः, आलोचना च तं सदा आवृत्य तिष्ठति। प्रमाणबद्धायाः धार्मिकसाम्प्रदायिकपद्धत्याः दूरमागत्य योग्यायोग्यविवेचन-शून्यतया प्रयोगसिद्धं तत्त्वं शरणं गत्वा बहुवारम् आत्मनः मूर्खतां विवेकतात्वेन सम्भाव्य आध्यात्मिकविवेचनां "विवेकशून्यतायाः लक्ष्म" इति मत्वा, स्वस्य विशिष्टं व्यक्तित्वम् अन्तःसत्त्वं च दूरीकृत्य चैतन्यशून्यो भवन्नस्ति। स न जानन्नस्ति यत् क्षणिकभौतिकसुखसाधनानि सर्वाणि तं दुःखवारिधौ पातयन्ति सन्तीति। एतादृश्यां विषमपरिस्थितौ वर्तमानो मानवः स्वनैतिक-ऋजुतां न रक्षति चेत्, अवश्यं समग्रस्य

मानवजनाङ्गस्य अधःपतनाय अधुनातनं वातावरणमेव नान्दी भवतीत्यत्र नास्ति विशयलेशः। जीवनसौख्यस्य मर्म अध्यात्मं निहितम्।

**विनष्टे शास्त्रे मानवजनाङ्गस्य अधःपतनम्**

यद्यपि मानवोऽत्याधुनिकसुभद्रविज्ञानसहायवशात् अणूनां गर्भमपि ज्ञातुं समर्थः, तथापि स्वात्मनः अन्तःशक्तितत्त्वं विज्ञातुमसमर्थोऽस्ति। स स्वहृदयान्तःशक्तीनां सूक्ष्मताज्ञान-सम्पादनार्थम् आध्यात्मिकतत्त्वज्ञाननिधिं शास्त्रं शरणं गच्छेत् । शास्त्रशरणं नाम वेदवेदाङ्गवेदान्ततत्त्वज्ञानां प्राचीन-ऋषिमुनिपुङ्गवानां शिष्यत्वस्वीकरणम्। तैरुक्ततत्त्वेषु विश्वासं संस्थाप्य तत्त्वध्यानपरभवनम्। इदमेव शाश्वतं सुखसोपानम्।

**शास्त्रसंरक्षणे उत्तरदायिनः -**

शास्त्रसंरक्षणे केषां केषां योगदानमपेक्षते? इत्यस्योत्तरमस्ति यत् गुरूणां, शिष्याणां, पीठाधिपतीनां, सामाजिकानां, विश्वविद्यालयानां, वैदिकपाठशालेत्यादीनां सर्वेषां योगदानं शास्त्रसंरक्षणे अपेक्षते।

**शास्त्रसंरक्षणोपायाः -**

शास्त्राणां संरक्षणे उपायाः के के? इत्यत्र पूर्वोक्तस्य विवरणं पश्यामः मुख्यतया उत्तरदायित्वं गुरूणां वर्तते। गुरुः शिष्यवित्तापहारकोऽभूत्वा शिष्यचित्तापहारको भवेत्।

शास्त्रसंरक्षणे गुरोरुत्तरदायित्वं बहुधा वर्तते। गुरौ धर्मैकायत्तचित्तता स्यात्। निःस्वार्थता स्यात्। योग्यस्य शिष्यस्य अन्वेषणं कृत्वा, लब्धे सति, तस्मै शास्त्रप्रयोजनादिकं कथयित्वा, तं शास्त्रविषये प्रेरयेत्। प्राचीनतया अवधिरहितपद्धत्या पाठनं कुर्यात्। केवलं पाठनेन शिष्यस्यैव ज्ञानाभिवृद्धिः स्यात्। अतो गुरुः प्रवचनं ग्रन्थरचनां टीकाटिप्पणीलेखनादिकं कृत्वा एवमनेकधा सरलतया शास्त्रसारप्रकटनं कुर्वन् जगते शास्त्रोपकारी भवेत्। पूर्वम् आचार्याणां वृत्तिः एवमासीत्।

**आत्मीयत्वं प्रकृष्टं प्रतिपदहितधीः निर्भरं प्रेम तावत्।**
**स्वाध्यायोऽध्यापनं वा सकलशुभमतिः प्राप्तमात्रेण तुष्टिः।।**

**धर्मैकायत्तचित्तं विहितकृतिरतिः सङ्गतिः सज्जनानाम्।**
**तामाचार्यप्रवृत्तिं हृदि विनिदधतः प्राक्स्थितिं साधयामः[33]।।**

इदानीन्तनानां केषाञ्चिदध्यापकानां वृत्तिः तावत् –

**नात्मीयत्वं प्रवृत्तं प्रतिपदविहतिः प्रेम तावत् सकामम्।**
**प्रश्नोत्तर्यां प्रवृत्तिः स्वहितकृतिततिस्तुष्टिपर्याप्त्यभावः।।**

**अर्थैकायत्तचित्तं स्वविहितविरतिः (ह्यविहितनिरतिः) सङ्गतिर्दुष्क्रियाणाम्।**
**अस्माकं तां प्रवृत्तिं हृदि न निदधतः प्राक्स्थितिं साधयामः[34]।।**

अतः शास्त्रसंरक्षणदीक्षेण गुरुणा एवं भवितव्यम् यत् –

**शिष्यं सम्यक् परीक्ष्य प्रतिपदविषयं तस्य यौग्यं विदित्वा।**
**तच्छुश्रूषात्प्रसन्नः स्रवदमृतमयैरीक्षणैः स्पर्शनैः स्वैः।।**

**आशीभिर्बोधनैर्वा करबदरसमां तस्य विद्यां च कृत्वा ।**
**दारार्थे चोदयेद्यः स हि परमगुरुः श्रेयसे कल्पतां नः[35]।।**

एवमेव शास्त्रसंरक्षणदीक्षेण शिष्येनापि भाव्यम् यथा –

**जिज्ञासुः सत्यसन्धः श्रवणमयतनुः प्रश्नकार्ये प्रवीणः।**
**श्रद्धाबद्धान्तरात्मा गुरुपदमभितश्चिन्तयन् सद्विवेकः।।**

**छात्रैरन्यैः समेतः कथितमखिलमप्यन्ततोऽन्तं नयन् यः।**
**साधुः सर्वत्र दीक्षाविधिधृतनियमः श्रेयसे शिष्य एषः[36]।।**

यदि सम्यक् गुरुणा पाठितोऽपि शिष्यः शास्त्रं नावगच्छति, तर्हि तत्र कस्य दोष इति चेत् शिष्यस्यैव।

यतो हि - **वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे।**
**न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।।**
**भवति च पुनर्भूयान् भेदः फलं प्रति तद्यथा।**
**प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः**[37]**।।**

प्राचीनकालवत् गुरुशिष्ययोः सम्बन्धः प्रेमबद्धः स्यात्। अर्थात् गुरोः शिष्ये वात्सल्यं भवेत्। शिष्यस्य गुरौ भक्तियुक्तगौरवं भवेत्। उपनिषदुक्तं वयं सर्वे प्रायः जानीम एव। तयोः सम्बन्धविषये सम्पत्प्रार्थना तै उपनिषदु प्रयुक्ता।

**सहनाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै।**
**तेजस्विनावधीतमस्तु, मा विद्विषावहै।। ओं शान्तिः शान्तिः शान्तिः**[38]**।।**

आवां गुरुशिष्यौ मिलित्वा शास्त्रम् अवतु, रक्षतु, प्रविशतु। **(अव–रक्षणगतिकान्ति-प्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु, इति धातुपाठात्)** गुरुशिष्यसम्बन्धो योग्यो भवतु इति यावत्। आवयोः सन्निधीयतामिति। आवां सहैव मिलित्वैव पालयतु, भुनक्तु। **भुजपालनाभ्यवहारयोरि**ति धातोः। आवां मिलित्वैव व्याख्यानविषये सामर्थ्यं करवावहै। आवां तेजस्विनौ भवाव। अधीतं फलप्रदमस्तु। अथवा आवाभ्यामधीतं तेजस्वि अस्तु इति। विद्याग्रहणनिमित्तं शिष्यस्य गुरोर्वा प्रमादकृतापराधात् प्राप्तं विद्वेषं नैव करवाव इति, गुरुः शास्त्रपाठनप्रारम्भे शान्तिपाठं करोति स्म, करोति च। योग्यशिष्यप्राप्तिः गुरोर्महद्भाग्यम्। योग्यगुरुप्राप्तिस्तु शिष्यसुकृदधीना।

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्**[39]**।। इति**

विष्णुलोकेतरान् काम्यकर्मोपादितान् परीक्ष्य असारानित्यतया विचार्य ब्रह्मज्ञानयोग्यः काम्यकर्मणि तत्फलेषु स्वर्गादिषु च निर्वेदम्, अर्थात् वैराग्यं प्राप्नुयात्। यतो हि अकृतः - मोक्षः, कृतेन –कर्मणा, नास्ति - न प्राप्यते। अतः साधकशिष्यो मोक्षादितरत्र निर्विण्णो विज्ञानार्थं मोक्षफलकब्रह्मज्ञानार्थं, समित्पाणिर्भूत्वा, छन्दोऽध्येतारं श्रोत्रियं भगवद्भक्तं ब्रह्मनिष्ठं गुरुमेव समधिगच्छेदिति। **गुरुशुश्रूषया विद्या** इति वचनानुगुणं गुरोः शुश्रूषां कुर्वन् शिष्यः, तत्सकाशात् विद्यां प्राप्नुयात्, इति शिष्यगुणान् उपनिषत् प्रकटयति। पीठाधिपतिनः "सम्पादयध्वं मतसम्प्रदायसमृद्धिमित्यादिदिशे यमीश्वरान्" इति आचार्यवचनानुगुणं कार्ये प्रवृत्ताः स्युः। तेषां मुख्यं कार्यं शास्त्रसंरक्षणं यत्तत्पाठनेन प्रवचनेन आशीभिर्वचनादिभिश्च सम्भवति।

संस्कृतविश्वविद्यालयेषु प्रायः सकलशास्त्रसंरक्षणं भवदस्ति। तत्र न्यूनता काचिदस्ति यत् व्याकरणन्यायशास्त्राणां सामन्यज्ञानेन विना अन्यशास्त्रपाठनम् इति। यतोहि **"काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्**[39]**"** इति तु सर्वैरङ्गीकृतं तत्त्वम्। न्यूनतायाः परिष्कारे शास्त्रसंरक्षणम् अतिसुलभम्। गोष्ठीनां, सङ्गोष्ठीनां, कार्यशालानां, विद्वत्सभादीनां निर्वहणेनापि शास्त्रसंरक्षणं भवति। एतत्सर्वं शास्त्रसंरक्षणे संस्कृतविश्वविद्यालयस्य संस्कृतविद्यापीठस्य संस्कृतसंस्थायाश्च योगदानं भवितुमर्हति।

एवं सामाजिकस्यापि शास्त्रसंरक्षणे पात्रम् अत्यन्तोत्कृष्टं वर्तते। सामाजिका वयं शास्त्रं ये पाठयन्ति पठन्ति च तेभ्यः प्रोत्साहप्रदानेन धार्मिकसंस्थाचालनेन धार्मिकशिबिरकार्यक्रमादीनां चालनेन संस्कृतिप्रतिबिम्बकलघुनाटकादीनां संयोजनेन अथवा ये चालयितुमुद्युक्ता योग्याश्च, तेषां पोषकरूपेण भवामश्चेदपि शास्त्रसंरक्षणं कृतं भवति। अन्ततो गत्वा शास्त्रसंरक्षणस्य भारः विशेषतया संस्कृतच्छात्राणां संस्कृतजनानामुपरि वर्तत इति वक्तुमभिलषे। यतो हि संस्कृतच्छात्राणां शास्त्रस्य च आधुनिकी स्थितिः रामकीटयोरिव वर्तते। रामकीटवन्नाम किमिति अनया लघुकथया ज्ञायते। यत् –

[40]एकदा रामलक्ष्मणौ वने गच्छन्तौ आस्ताम्। दूरात् कश्चन् लघुध्वनी रामस्य कर्णपटलं ताडयति। तच्छ्रुत्वा रामो लक्ष्मणं "कोऽयं लघुध्वनिः", "कुतः आगच्छति" इति पृष्टवान्। लक्ष्मणः तज्ज्ञात्वा, आगत्य वदति यत् कश्चन् लघुकीटः रुदन् अस्ति इति। रामः तस्य दुःखदूरीकरणार्थं तत्समीपं गत्वा पृच्छति। किमर्थं रुदन् असीति। तदा कीटः वदति - हे राम! नमस्ते क्षम्यताम्। अस्मिन् मार्गे प्रतिदिनं बहवो भवन्ति गन्तारः। ते गमनसन्दर्भे मदुपरि पादं संस्थाप्य गच्छन्ति। तदा महत्या वेदनया अहं राम राम राम इति भवन्तं स्मरन् मम दुःखं विस्मरामि स्म। किन्तु अद्य भवानेव मदुपरि पादं संस्थाप्य गतवान्। अतः कम् इदानीं स्मृत्वा दुःखनिवारणं करोमि। अतः रुदन्नस्मीति। अद्य संस्कृतशास्त्रस्य स्थितिरपि पादहतलघुकीटस्थितिवदस्ति। रक्षकः राम एव कीटस्योपरि पादं संस्थापितवान् यथा तथा संस्कृतशास्त्रसंरक्षकाः संस्कृतच्छात्रा वयं संस्कृतशास्त्रस्योपरि पादं न्यस्तवन्तः। संस्कृतशास्त्रमिदानीं कान् शरणं गच्छेत्। वयं जागृता भवामः। अतः शास्त्रसंरक्षणम् यथाशक्तिसोत्साहं कुर्मः इति।

जयतु संस्कृतमाता। जयतु शास्त्रम्। भवतु संस्कृत-शास्त्रसंरक्षणम्।

।।श्रीकृष्णार्पणमस्तु।।

**उपयुक्तग्रन्थाः**

अथर्वणोपनिषत्– वेदः (अपौरुषेयः)।

अणुभाष्यम्– श्रीमन्मध्वाचार्याः।

अमरकोशः– अमरसिंहः।

उत्तररामचरितम् - भवभूतिः।

कादम्बरी,शुकनासोपदेशः– बाणभट्टः।

कारिकाकरः, दार्शनिककारिकाः– तिलक एम् रावः

गन्धर्वतन्त्रम् - (द्रष्टव्यम्) – कुत्र इति।

तैत्तिरीयोपनिषत् - वेदः (अपौरुषेयः)।

द्वादशस्तोत्रम् - श्रीमन्मध्वाचार्याः।

देवीभागवतम्– श्रीमद्वेदव्यासाः।

पद्मपुराणम्, उत्तरखण्डम्- श्रीमद्वेदव्यासाः।

मत्स्यपुराणम् - श्रीमद्वेदव्यासाः।

महासुभाषितसंग्रहः–sanskritdocuments.org

योगवासिष्ठम्– श्रीमद्वाल्मीकिमहर्षिः।

वह्निपुराणम् - श्रीमद्वेदव्यासाः।

विद्धशालभञ्जिका– राजशेखरः।

विष्णुपुराणम् - श्रीमद्वेदव्यासाः।

श्रीमद्भगवद्गीता - श्रीमद्वेदव्यासाः।

श्रीमद्भागवतम् - श्रीमद्वेदव्यासाः।

श्लोकवार्तिकम् – कुमारिलभट्टः।

सांख्यसंग्रहः - क्षेमेन्द्रः।

सुभाषितरत्नभाण्डागारम् – काशिनाथशर्मा।

हितोपदेशः – नारायणपण्डितः।

**स्फूर्तिदायकाः -**

1. श्लोककर्तारः– श्रीमन्तः दोर्बलप्रभाकरशर्ममहाभागाः।

2. चमू कृष्णशास्त्रिमहाभागाः।

## अन्त्यटिप्पणी -

1. पद्मपुराणम् – उत्तरखण्डे 17 अध्यायः।
2. श्लोकवार्तिकम् – शब्दपरिच्छेदः – 4 श्लोकः, कारिकाकरः – दार्शनिककारिकाः – 135 श्लोकः।
3. कारिकाकरः – दार्शनिककारिकाः – 136 श्लोकः।
4. वह्निपुराणे सुनामद्वादशीनामाध्यायः।
5. सांख्यसंग्रहः।
6. भागवतम् – 11-8-10.

*शेवधिः*

7. मत्स्यपुराणम् – 3 अध्यायः।

8. पद्मपुराणम् – उत्तरखण्डे 17 अध्यायः।

9. देवीभागवतम् – 1 स्कन्ध-1 अध्याय-14 श्लोकः।

10. हितोपदेशः – 10 श्लोकः।

11. हितोपदेशः – 7 श्लोकः।

12. अमरकोशः – 3-3-179(नानार्थवर्गः)

13. श्रियः प्रसूते विपदो रुणद्धि यशांसि दुग्धे मलिनं प्रमार्ष्टि। संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः।।

14. पद्मपुराणम् – उत्तरखण्डे 17 अध्यायः।

15. द्वादशस्तोत्रम् – 3 अध्यायः, 1श्लोकः।

16. भगवद्गीता – 2 अध्यायः, 47 श्लोकः।

17. भगवद्गीता – 3 अध्यायः, 35 श्लोकः।

18. भगवद्गीता – 15 अध्यायः 16,17 श्लोकौ।

19. भगवद्गीता – 15 अध्यायः 19.20 श्लोकौ।

20. द्वादशस्तोत्रम् – 3 अध्यायः, 2 श्लोकः।

21. भगवद्गीता – 4 अध्यायः, 39 श्लोकः।

22. अनुभाष्यम् – 3 अध्यायः, 1 श्लोकः।

23. सुभाषितम्।

24. कादम्बरी – शुकनासोपदेशः।
25. कादम्बरी – शुकनासोपदेशः।
26. विष्णुपुराणम् – 1स्क-19 अ- 41श्लो.
27. महासुभाषितसंग्रहः – 8620
28. उत्तररामचरितम् – 4 अंकः, 11 श्लोकः।
29. योगवासिष्ठम् – 1-18-3.
30. सुभाषितरत्नभाण्डागारम्– 154 -40.
31. गन्धर्वतन्त्रम् – प्रथमपटलः। (द्रष्टव्यम्)
32. प्रसिद्धः शान्तिपाठः।
33. श्लोककर्ता – श्रीमन्तः दोर्बलप्रभाकरशर्माणः। अध्यक्षाः। ( संस्कृतभारती-आन्ध्रप्रदेशः।)
34. श्लोककर्ता – श्रीमन्तः दोर्बलप्रभाकरशर्माणः। अध्यक्षाः। ( संस्कृतभारती-आन्ध्रप्रदेशः।)
35. श्लोककर्ता – श्रीमन्तः दोर्बलप्रभाकरशर्माणः। अध्यक्षाः। ( संस्कृतभारती-आन्ध्रप्रदेशः।)
36. श्लोककर्ता – श्रीमन्तः दोर्बलप्रभाकरशर्माणः। अध्यक्षाः। ( संस्कृतभारती-आन्ध्रप्रदेशः।)
37. उत्तररामचरितम् – 2-अंकः, 4श्लोकः।
38. तैत्तिरीयोपनिषत् – प्रसिद्धः शान्तिमन्त्रः।
39. अथर्वणोपनिषत् – 2 खण्डः, 11 श्लोकः।
40. चमू कृष्णशास्त्रिभिः संक्रमणम् इति ग्रन्थे कथिता कथा।

* * *

# वैष्णवागमे योगतत्त्वविचारः

डा.यन्.वि.श्रीनिवासमूर्तिः*

अखिलस्य जगतस्स्रष्टा पाता हर्ता च परमात्मा श्रीमन्नारायण एव। अस्य परमात्मनः सकाशादुच्छ्वासनिश्श्वासरूपेण समुद्भूतस्य वाङ्मयस्य वेदसाहित्यस्य निगम इति नामान्तरं वर्तते। मन्यते निगमोऽयं कालान्तरवशाद् कर्मानुष्ठानबाहुल्याद्युगधर्मानुसारञ्चागमरूपेण रूपान्तरं जात इति विद्वद्भिः। वेदेषु विद्यमानाः यज्ञाः ये सन्ति तेषां प्रतिरूपा एव देवालये विद्यमाना अर्चादयोः भवन्ति। एवं वेदेषु विद्यमानानां यज्ञादीनां विनियोग आगमग्रन्थेषु बहुधा दृश्यते।

मनसो अचञ्चलत्वसाधनं, चञ्चलत्वनिवारणं, धर्ममार्गेणार्थ-काम-मोक्षसम्पादनं, क्रोधादीनां निवारणरूपा एते आगमाः तत्तद्देवताभेदेन बहुविधा वर्तन्ते। वैष्णव-शैव-शाक्त-गाणापत्य-सौर-भैरव-कौमारा इति। तेष्वन्यतमः वैष्णवागमः वैखानस-पाञ्चरात्र-भागवतभेदेन त्रिधा विभज्यते। वैखानसागमः भगवता विखनसा उपदिष्टः। पाञ्चरात्रागमः विष्णोर्मुखोद्गतं भवति। वैष्णवागमे नाम पाञ्चरात्र-वैखानसयोः विद्यमानेषु ज्ञान-योग-क्रिया-चर्यामार्गेषु चतुर्षु मोक्षमार्गेष्वन्यतमः योगमार्गः। अहं योगमार्गमुद्दिश्य पत्रेऽस्मिन् परिशीलयामि यथामति।

**योगशब्दार्थः** -

**योगो नाम चित्तवृत्तिनिरोध** इति पतञ्जलिना योगसूत्रे[१] प्रोच्यते। **जीवात्मपरमात्म-नोर्योगो योग** इति योगशब्दनिर्वचनं वैखानसागमे[२] अवलोक्यते।

---

**"Shevadhih"**, Research Journal of Sri Venkateswara Vedic University, Tirupati. ISSN: 2229-4031, Email: shevadhih@gmail.com Vol-13, 1st & 2nd issues - January to December 2021, Vol-14, 1st & 2nd issues - January to December 2022, Pages.37-46.

* Project Associate, Research & Publication, Manuscript Section, S.V. Vedic University, Cell-9866319153, E-Mail: nvsmurthy1980@gmail.com

**अव्याकुलस्य चित्तस्य मनसो बन्धनं यदि।**
**यत्तद्योगं विजानीहि स योगो द्विधो भवेत्॥ [३]**

अव्याकुलचित्तस्य बन्धनमेव योगः। योगोऽयं कर्मयोगः ज्ञानयोगश्चेति द्विधा वर्णितोऽभूत् पाञ्चरात्रागमे[४]। कर्माचरणमिति धिया विहितेषु कर्मसु मनसः बन्धनं कर्मयोगः[५] भवेदिति सर्वदा चित्तस्यार्थे श्रेयसि बन्धनमेव ज्ञानयोगः[६] भवेदिति च योगद्वैविध्यं पाञ्चरात्रागमे अस्त्युपदिष्टम्।

भगवतः आराधनात्पूर्वमाराधकस्यात्मशोधनं शरीरशुद्धिराध्यात्मिक-तत्त्वज्ञानसम्पादनं मालिन्यनिवृत्तिश्च अनिवार्यरूपेण निर्दिश्यते योगेन। अतोऽत्र चित्तवृत्तिनिरोधकयोगः भगवदाराधने प्रधानतम अंश इति ज्ञायते।

**योगाङ्गानि –**

योगविषयेऽस्मिन् यौगिकक्रियासम्बद्धाः अष्टौ योगाङ्गविषयाः प्रतिपादिताः सन्ति। ते तावत् यम-नियम-आसन-प्राणायाम-प्रत्याहार-ध्यान-धारण-समाधयः इत्यष्टविधयोगाङ्गाः तेषां भेदाश्च वर्णिताः दृश्यन्ते वैष्णवागमे [७]।

**यमस्वरूपम् -**

योगाङ्गेषु यमः भिद्यते दशधा। ते अहिंसा-सत्यम्-अचौर्यं-स्वदारनिरतिः- मैथुनत्यागः- दया-आर्जवं-क्षान्तिः-धैर्यं-मिताशनं-शौचमिति यमस्वरूपं दृश्यते वैखानसागमे[८]।

**सत्यं दया धृतिः शौचं ब्रह्मचर्यं क्षमार्जवम्।**
**मिताहारस्तथास्तेयमहिंसेति यमा दश॥ [९]**

अहिंसा - सत्यम् - अस्तेयं - ब्रह्मचर्यं - दया - आर्जवं - क्षमा – धृतिः -मिताहारः - शौचमिति यमस्वरूपं पाञ्चरात्रागमे नामान्तरेण वैखानसागमोक्तवदुपदिश्यते।

**नियमस्वरूपम् -**

योगाङ्गेषु प्रयुक्तः नियमोऽपि वैखानसागमे[१०] भिद्यते। तपः - सन्तोषः - आस्तिक्यबुद्धिः - दानं - विष्णुपूजा - वेदार्थश्रवणं – कुत्सितकर्मसु लज्जा -गुरूपदेशश्रद्धा - मन्त्राभ्यासः - होम इति दशधा।

**सिद्धान्तश्रवणं दानं मतिरीश्वरपूजनम्।**
**सन्तोषस्तप आस्तिक्यं ह्रीर्जपश्च तथा व्रतम्॥**

**एते तु नियमाः प्रोक्ता दश योगस्य साधकाः।**

सिद्धान्तश्रवणं - दानं - मतिः - ईश्वरपूजनम् - सन्तोषः - तपः - आस्तिक्यं - ह्रीः - जपः - व्रतमिति नियमस्वरूपम् अहिर्बुध्न्यसंहितायामुपदिष्टम्[११]। शौचम् - इज्या - तपः - सत्यं - स्वाध्यायोपनिग्रहौ - व्रतः - उपवासः - मौनं - ध्यानमेते नियमगुणाः अपि पाञ्चरात्रागमे[१२] निर्दिश्यन्ते। एतैर्यमनियमैर्विंशतिगुणैर्युक्तः योगाधिकारी[१३] भवेदिति योगाधिकारिणः लक्षणं स्पष्टमुक्तिमेव वैखानसागमे।

**आसनम् -**

सुखचिरमासनं भवेदित्यागमवचनानुसारेण योगी स्चिरूपेणासनं परिकल्प्य योगं युञ्जीत[१४]। अस्य च योगाङ्गस्य तृतीयस्यासनस्य भेदाः विद्यन्ते नवधा ब्रह्म - स्वस्तिक - पद्म - गोमुख - सिंह - मुक्त - वीर - भद्र - मयूरा इति। आसनेष्वेषु ब्रह्म - स्वस्तिक - पद्मासनान्युत्तमानीति गोमुख - सिंह - मुक्तानि मध्यमानीति वीर - भद्र - मयूराण्यधमानि भवन्तीति वर्णितमस्ति उत्तम - मध्यम - अधमभेदेनासनत्रैविध्यं वैखानसागमे[१५]।

**आसनानि प्रवक्ष्यामि योगिनस्तु यथातथम्॥**

**स्वस्तिकं पद्मकं चैव विस्तीर्णं भद्रकं तथा।**
**तथा योगासनं चैव दण्डासनमथापि वा॥**

**जङ्घं चैवार्धजङ्घं च पार्श्वमुत्तुटिकासनम्।**
**दशासनानि सम्प्रोक्तान्यस्मिंस्तन्त्रे मुनीश्वरैः॥** [१६]

**छत्रं पद्मासनं कूर्मं मायूरं कौक्कुटं तथा।**
**वीरासनं स्वस्तिकं च भद्रं सिंहासनं तथा।**
**मुक्तासनं गोमुखं च मुख्यान्येतानि नारद॥** [१७]

पाञ्चरात्रागमे तावत् स्वस्तिक - पद्म - विस्तीर्ण - भद्र - योग - दण्ड -जङ्घ - अर्धजङ्घ - पार्श्व - उत्तुटिक - छत्र - कूर्म - मयूर - कुक्कुट - वीर - सिंह - मुक्त - गोमुखा इति स्पष्टमुपदिश्यन्ते आसनभेदाः तेषां लक्षणानि च।

**प्राणायामप्रकारः -**

प्राणापानसमानयोगः प्रणायामः। अयं च प्राणायामः रेचक - पूरक - कुम्भकानी त्रिविधो भवेत्। निश्वासविसर्गः रेचकम्, निश्वासोध्मानं पूरकम्, निश्वासनिरोधनं कुम्भकम् इति प्रतिपादितं प्राणायामत्रैविध्यं वैखानसागमे। प्राणमपानेन संयोज्य देहमध्ये स्थितं पुरुषं दृष्ट्वा नासाग्रे पश्यन् इडापिङ्गलानाडिषु वायुं समारोप्य शनैः शनैः वायोश्च च विसर्जनमेव प्राणायामः भवेदिति वर्ण्यते प्राणायामप्रकारः वैखानसागमे[१८]।

**रेचनं पूरणं वायोः रोधनं कुम्भकं ततः।**
**चतुर्भिः क्लेशनं वायोः प्राणायाम उदीरितः॥** [१९]

नाडीशुद्धिरेव प्राणायामः। रेचनं, पूरणं, वायोः रोधनं, कुम्भकमिति प्राणायामः चतुर्धा भवेदित्युक्तमस्ति पाञ्चरात्रागमे। तत्रैव मात्राभेदेन प्राणायामः ज्येष्ठ - मध्यम – कनीयांस इति त्रिधोक्तोऽस्ति[२०]। प्राणायामेन योगी जितेन्द्रियः, अल्पाशी, तेजस्वी, बलवान् भवेदिति प्रतिपाद्यते प्राणायामफलमप्यत्रैव।

**प्रत्याहारः -**

**प्रत्याहारं प्रकुर्वीत चित्तसंयमनं तु यत्।**
**बुद्धिर्मनस्त्वहङ्कारस्त्रिभिश्चित्तं प्रकीर्तितम्॥**

**तथापि मनसः कुर्यात् प्रत्याहारं प्रयत्नतः।**[२१]

चित्तसंयमनमेव प्रत्याहारः। सर्वेभ्यः विषयेभ्य इन्द्रियाणां निवर्तनं प्रत्याहारः। चक्षुरादीन्द्रियाणीन्द्रियार्थ – विषयेभ्य उपसंहृत्य तेषां स्थानेषु स्थापनमेव प्रत्याहारः[२२] भवेदिति दृश्यन्ते प्रत्याहारलक्षणान्यागमग्रन्थेषु।

भवेदिति वैखानसागमे[२३] उक्तमिन्द्रियाणां सर्वेभ्यो विषयेभ्यो बलादाहरणम्, आत्मनि सर्वमात्मवदीक्षणं, विहितकर्मणां बहिर्विना मनसा कृतं, पादादिमूर्ध्निपर्यन्तं मर्मस्थानेषु वायुं च समारोप्य ऊर्ध्वत अधस्ताच्च समाकर्षणं, नाडीमार्गेषु वायुसमारोपणं निरोधनं चेति प्रत्याहारस्वरूपम्।

**मनसात्मन्यनुष्ठानं यदिदं नित्यकर्मणाम्।**
**प्रत्याहारः स विज्ञेयः योगाङ्गत्वेन सेवितः॥**

**यद्वाष्टादशभेदेषु मर्मस्थानेषु धारणम्।**
**स्थानात्स्थानं समाकृष्य सा प्रत्याहृतिरिष्यते॥**[२४]

पाञ्चरात्रागमे योगपादे प्रत्याहारस्वरूपं वर्णितमस्ति द्विधा नित्यकर्मणि मनसात्मन्यनुष्ठानम्, एकस्मात् स्थानादन्यस्थानस्याकर्षणेन मनसो अष्टादशमर्मस्थानेषु स्थापनमिति।

**धारणविधिः -**

**शुभे ह्येकत्र विषये चेतसो यच्च धारणम्।**
**निश्चलेन तु योगीन्द्रैर्धारणा तु समीरिता।।**[२५]

धारणं नाम शुभे स्थाने चित्तस्य धारणमेव। पृथिव्यादिमहाभूतेषु पञ्चसु देवानां पञ्चस्वरूपाणि हृदये परमात्मानं च धारणमेव धारणं भवति। धारणमिदं संसारसागरोत्तारणकारकं भवतीति स्पष्टं प्रोक्तमस्ति वैखानसे[२६]तथा च पाञ्चरात्रे धारणप्रकारः यथा-

**पञ्चभूतमये देहे भूतेष्वेतेषु पञ्चसु।**
**मनसो धारणं यत्तद्युक्तस्य च यमादिभिः।**
**धारणा सा च संसारसागरोत्तारकारणम्।।**[२७]

**वायुः परिचितो यत्नाद्भावयित्वा तु कुण्डलीम्।**
**अग्निना च सुषुम्नायां प्रविशेदनिरोधतः।।**

**वायुना सह चित्तं प्रविशेच्च महापदम्।**
**यस्य चित्तं स्वपवनः सुषुम्नां प्रविशेदिह।।**

**भूमिरापोऽनलो वायुराकाशं चेति पञ्चकम्।**
**एषु पञ्चसु देहानां धारणं पञ्चधोच्यते।।**[२८]

**ध्यानप्रकारः -**

परमात्मनः चिन्तनं ध्यानम्[२९]। ध्यानञ्चेदं निष्कलं सकलं च। तेषु निष्कलं स्याद्देवैरप्यनभिलक्ष्यमदृश्यम्। सकलं तावत् विद्यते द्विधा निर्गुणं सगुणं चेति। निर्गुणं नाम निष्कलस्वभावः परमात्मनो अन्यत् किञ्चित् नास्तीति केवलस्य परमात्मनः ध्यानं निर्गुणम्। ध्यानेऽस्मिन् सर्वकारणकारकः जगत्पतिः नारायण एवावभासते। व्यपदिश्यते इदमेव निर्गुणध्यानमिति। देवीभूषणाद्यैस्सह सपरिषदः कल्याणगुणनिधेस्स्मरणं सगुणध्यानमुच्यते। सगुणनिर्गुणध्यानयोरनयोः सगुणध्यानमुत्तमोत्तमं सर्वसिद्धिप्रदं चेति कथ्यते वैखानसागमे[३०]।

**चिन्तनं वासुदेवस्य परस्य परमात्मनः।**
**सरूपस्याप्यरूपस्य स्वहृदम्बुरुहासने।**
**यत्तद्ध्यानं प्रशंसन्ति कैवल्यफलदं सदा।।**[३१]

सरूपारूपात्मकं स्वहृदयकमले परिवेष्टितं परमपुरुषस्य परस्य वासुदेवस्य चिन्तनं ध्यानमित्यनेन ध्यानेन परमपदप्राप्तिः सिध्यतीति वर्ण्यते पाञ्चरात्रागमे।

**समाधिः -**

वैखानसागमे[३२] वर्णितं जीवात्मनः परमात्मना समावस्था समाधिरिति। उपदिष्टं पाञ्चरात्रागमे तावत् जीवात्मनः परमात्मनि यदैक्यं तत् समाधिरिति यथा-

**जीवात्मनः परस्यापि यदैक्यमुभयोरपि।**
**समाधिः स तु विज्ञेयः साध्वर्थानां प्रसाधकः।।**[३३]

**तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्।।**
**मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते।**[३४]

मनसा ध्याननिष्पाद्यं कल्पनाहीनं सगुणनिर्गुणमचिन्त्याद्भुतमनवद्यं नित्यनिषेवणं परं ज्योतिः परात्परं परमपुरुषं श्रीमन्नारायणं परवासुदेवस्य स्वरूपग्रहणमेव समाधिर्भवतीति पाञ्चरात्रे उक्तम्।

**योगफलम् -**

**कथितानि तवैतानि योगाङ्गानि द्विजोत्तम।**
**यथाशक्त्यभ्यसन्नेवं मन्त्री नित्यमतन्द्रितः।**
**महानन्दमवाप्नोति महतीमपि सम्पदम्।।**[३५]

एवं प्रकारेण यः नित्यं योगं युञ्जीत सः विजितेन्द्रियो भूत्वा महानन्दमयं परमं लोकं प्राप्य तत्रत्यं परमानन्दमयस्वरूपिणं परात्परं परमपुरुषं प्राप्य पुनरावृत्तिरहितं शाश्वतस्थानं साधयतीति योगफलमुक्तमस्ति वैष्णवागमे।

**उपसंहारः -**

एतेषामष्टाणां योगाङ्गानां स्थालीपुलाकन्यायेनानेन परिशीलनेन वैष्णवागमे योगतत्त्वं सम्यक्तया स्पष्टतयाधिकभेदाभावेन वर्णितं वयं ज्ञातुं प्रभवामः। अतः आचार्यः योगसाधनपूर्वकं मनसः चञ्चलत्वसाधनं साधयित्वा भगवतः मानसिकाराधनेन मुक्तिसाधनमेवोभयोरागम-योस्सारः भवेदित्युक्त्वा विरमामि विस्तरभयात्।

## अन्त्यटिप्पणी -

१. योगदर्शनम्.१,२

२. विमानार्चनाकल्पः.९६ पटलः

३. विष्णुतिलकसंहिता.४,३-४
यत्करोति समाधानं चित्तस्य विषये क्वचित्।
अनाकुलमसंक्षोभं स योग इति कीर्त्यते।। परमसंहिता.१०,५-६

४. स च ज्ञानक्रियाभेदाद् ज्ञेयो योगो द्विधा बुधैः।। विष्णुसंहिता.३०,७४

५. कर्म कर्तव्यमित्येवं विहितेष्वेव कर्मसु।
बन्धनं मनसो नित्यं कर्मयोगः स उच्यते।। पाद्मसंहिता.१,५
कर्तव्यंविहितं कर्म इति यद्बन्धनं नृणाम्।
स कर्मयोगः कथितः ज्ञानयोगमिताऽश्शृणु।। विष्णुतिलकसंहिता.४,४-५

६. यत्तु चित्तस्य सततं अर्थे श्रेयसि बन्धनम्।
ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शुभः।। पाद्मसंहिता.१,६
अर्थे श्रेयसि चित्तस्य सततं यन्निबन्धनम्।
ज्ञानयोगस्स एव स्यात्सर्वसिद्धिप्रदायकः।। विष्णुतिलकसंहिता.४,५-६

७. यमश्च नियमश्चोभावासनं प्राणसम्यमः।
प्रत्याहारो धारणा च ध्यानं भ्रूमध्यमे हरेः।।
समाधिः समतावस्था साष्टाङ्गो योग उच्यते। श्रीप्रश्नसंहिता.३,१८-१९
विमानार्चनाकल्पः.९६ पटलः

८. विमानार्चनाकल्पः.९६ पटलः

९. अहिर्बुध्न्यसंहिता.३१,१८ & पाद्मसंहिता.१, ८ & विष्णुतिलकसंहिता.४, ८ & नारदीयसंहिता.३०,१०-११

१०. विमानार्चनाकल्पः.९६ पटलः

११. ३१,२४-२५

१२. शौचमिज्या तपः सत्यं स्वाध्यायोपस्थनिग्रहौ।
व्रतोपवासौ मौनं च ध्यानं च नियमा दश।। नारदीयसंहिता.३०,१२-१३

१३. विमानार्चनाकल्पः.९६ पटलः

१४. प्रमाणयुक्तमचलं यथा रुचि सुखप्रदम्।।
योगिनामासनं प्रोक्तं योगससिंद्धिकारणम्। नारदीयसंहिता.३०,१२-१३

१५. विमानार्चनाकल्पः.९६ पटलः

१६. सनत्कुमारसंहिता ऋषिरात्रम्.३,२४-२६

१७. अहिर्बुध्न्यसंहिता.३१,३१-३२

१८. विमानार्चनाकल्पः.९६ पटलाः

१९. पाद्मसंहिता.३,७
रेचकं पूरणं वायोः रोधनं कुम्भकं ततः।
वातनं रोधनं वायोः प्राणायामस्स उच्यते।।विष्णुतिलकसंहिता.४,६२-६३

२०. रेचकादिचतुर्भिस्तु मात्राभेदकृतैस्तु यः।
कनीयान् मध्यमो ज्येष्ठः प्राणायामः प्रकीर्तितः।। पारमेश्वरसंहिता.७,४४६

२१. पारमेश्वरसंहिता.७,४४७-४४८
शब्दादिष्वनुरक्तानि ग्राह्याण्यक्षाणि योगवित्।
कुर्याच्चित्तानुकारीणि प्रत्याहारः प्रकीर्तितः।।नारदीयसंहिता.३०,१६-१७

२२. इन्द्रियाणीन्द्रियार्थेभ्यो यत् प्रत्याहरणं स्फुटम्।
योगी कुम्भकमास्थाय प्रत्याहारः स उच्यते।। श्रीप्रश्नसंहिता.३,५७

२३. विमानार्चनाकल्पः.९७ पटलः

२४. विष्णुतिलकसंहिता.४,९९-१०१ र् पाद्मसंहिता.४,८-१०

२५. नारदीयसंहिता.३०,१७-१८

२६. विमानार्चनाकल्पः.९८ पटलः

२७. पाद्मसंहिता.४,१३-१४

२८. श्रीप्रश्नसंहिता.३,६९-७१

२९. ध्यानं लक्ष्यस्य निष्पत्तिश्चिन्तनं तत् प्रकीर्तितम्। पारमेश्वरसंहिता.७,४४९

३०. विमानार्चनाकल्पः.९९ पटलः

३१. पाद्मसंहिता.५,३

३२. विमानार्चनाकल्पः.१०० पटलः

३३. विष्णुतिलकसंहिता.४,१३२-१३३ र् पाद्मसंहिता.५,१७

३४. नारदीयसंहिता.३०.१९-२०

३५. नारदीयसंहिता.३०.२०-२१

* * * *

# वाजसनेयिप्रातिशाख्ये सन्ध्यप्राप्तवद्भावनिरूपणम्

**डा. पं.ना.म.प्र.दीपकशर्मा ***

**मन्मूर्ध्नि कालियफणे विकटाटवीषु श्री वेङ्कटाद्रिशिखरे शिरसि श्रुतीनाम् ।**
**चित्तेऽप्यनन्यमनसां सममाहितौ ते श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ।।**

**गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।**
**गुरुस्साक्षात्परम्ब्रह्म तस्मै श्रीगुरवे नमः ।।**

शुक्लयजुर्वेदलक्षणग्रन्थेषु मुख्यतमोऽयं ग्रन्थो वाजसनेयिप्रातिशाख्यमिति । अस्मिन् ग्रन्थे संहितापदक्रमपाठानां स्वरसन्धिविषयकनियमाः उपदिष्टाः । अस्य शुक्लयजुर्वेदप्रातिशाख्यमिति नामान्तरमस्ति । यतः शुक्लयजुर्वेदस्य पञ्चदशापि शाखाः अनुलक्ष्य प्रवर्तत इति । तथा च कात्यायनाचार्येणोपदिष्टमित्यतः कात्यायनप्रातिशाख्यमित्यपीमं व्यवहरन्ति । अस्य ग्रन्थस्य प्रसिद्धं भाष्यद्वयं विद्यते । तयोरेकमुवटाचार्येण कृतं मातृमोदाख्यं माध्यन्दिनशाखानुसारि । अपरं काण्वशाखानुगतं अनन्तभट्टाचार्येण कृतं पदार्थप्रकाशाख्यम् । अस्मिन् ग्रन्थे अष्टौ अध्यायाः विद्यन्ते । तत्र प्रथमे आदौ ग्रन्थारम्भस्य आवश्यकतां निरूप्य, वागुत्पत्तिप्रकारं, वर्णानां स्थानकरणानि, ग्रन्थोपयोगिन्यः संज्ञाः परिभाषाश्च उपदिदेशाचार्यः । द्वितीये निपातपदानां नामपदानां च स्वरनियमाः प्रस्तूयन्ते । तृतीयचतुर्थयोः सन्धिविशेषाः, सङ्क्रमविचारः,

**"Shevadhih"**, Research Journal of Sri Venkateswara Vedic University, Tirupati. ISSN: 2229-4031, Email: shevadhih@gmail.com Vol-13, 1st & 2nd issues - January to December 2021, Vol-14, 1st & 2nd issues - January to December 2022, Pages.47-52.

* Guest lecturer, S V Vedic University, Tirupati; E-mail: deepupnmp@gmail.com

क्रमपाठविशेषाश्च प्रतिपादिताः । पञ्चमे अवग्रहविचारः प्रवृत्तः । षष्ठे आख्यतोपसर्गपदानां स्वरनियमाः प्रस्तूयन्ते । सप्तमे अनार्षे इतिशब्दे परे सन्धिः कथ्यते । अष्टमे वर्णसमाम्नायः स्वाध्यायनियमाश्च उपदिश्यन्ते । एवं विस्तृतेऽस्मिन् ग्रन्थे अष्टसु अध्यायेषु आहत्य चतुस्त्रिंशदुत्तरसप्तशतं सूत्राणि (734) विद्यन्ते ।

तृतीयाध्याये सन्धिप्रकरणमारभमाणः आचार्यः आदौ कांश्चन प्राथमिकानंशान् उपदिदेश । आदौ **संहितायाम्**[1] इति सूत्रम् । इदमधिकारसूत्रम् । अत्र संहिताशब्दस्य वर्णानां सान्निध्यमित्यर्थः । यद्यपि वैदिकसम्प्रदाये संहिताशब्दः संहितापाठवाचकत्वेन रूढः । तथापि अत्र सोऽर्थः नाभिमतः । यतः वक्ष्यमाणाः सन्धयः क्रमपाठे नेत्यापतति ।

अनन्तरं **पदान्तपदाद्योः सन्धिः**[2] इति सूत्रम् । प्रायः वक्ष्यमाणाः सन्धयः पूर्वपदान्तवर्णस्य उत्तरपदादेश्च भवन्तीत्यर्थः ।

तदुपरि **न परकालः पूर्वकाले पुनः**[3] इति सूत्रम् । न इति निषेधार्थकः । परः कालो यस्य सः परकालः । पूर्वः कालो यस्य सः पूर्वकालः । उभयत्रापि अन्यपदार्थः सन्धिः । पूर्वकालसन्धौ प्रवर्तमाने परकालसन्धिः प्राप्तवन्न भवति इति सूत्रार्थः । विषयस्तूदाहरणे स्पष्टीभविष्यति ।

आदौ कोऽयं परकालः ? कश्च पूर्वकालः ? उच्यते – प्रातिशाख्यतृतीयाध्याये षष्ठसूत्रादारभ्य चतुर्थाध्याये त्रिंशदुत्तरशततमसूत्रपर्यन्तं सन्धिविधायकसूत्राणि उपदिष्टानि । तानि सर्वाण्यपि त्रिधा विभक्तानि । एते विभागा एव अत्र कालशब्देन व्यवह्रियन्ते । यथा – तृतीयाध्याये षष्ठसूत्रादारभ्य चतुर्थाध्याये दशमसूत्रपर्यन्तं प्रथमः कालः । चतुर्थाध्याये एकादशसूत्रादौदशभ्यः पञ्चविंशत्युत्तरशततमसूत्रपर्यन्तं(125) द्वितीयः कालः । तदनन्तरं तृतीयः कालः ।

अयं विभागश्च सूत्रकारेण सूचितः । यथा – **ह्यन्तराः कालाः**[4] इति । हि अन्तरं व्यवधानं येषामिति विग्रहः । अन्यपदार्थः कालः । कालानां मध्ये हि शब्दः अवधिरूपेण पठ्यते इति भावः । एवं चतुर्थाध्याये एकादशं सूत्रं, षड्विंशत्युत्तरशततमं सूत्रं च **हि**[5] इत्येव । प्रथम- हि- शब्दात् पूर्वं प्रथमः कालः । द्वयोर्मध्यस्थः द्वितीयः । द्वितीय-हि-शब्दात् परः तृतीयः इति

विवेकः। तत्र पूर्वः पूर्वः पूर्वकाल इति परः परः परकाल इति च गम्यते। एवं विभक्ते सति परकालिकसूत्रोक्तः सन्धिः पूर्वकालिकसूत्रोक्तसन्धौ प्रवर्तमाने अप्राप्तवद्भवति इति **न परकाल-** सूत्रेण व्यवस्थाप्यते । यत्र एकस्य सन्धेः प्रवृत्तेरनन्तरं अपरस्य अनिष्टस्य सन्धेः अतिप्रसक्तिः स्यात्, तद्वारणाय इयं व्यवस्था उपयुज्यते । यथा पाणिनीये असिद्धवद्भावः प्रसिद्धः प्रायः तादृश एव अत्र प्रातिशाख्ये अप्राप्तवद्भावः इति विवेकः ।

उदाहरणम् –

**महाँ इन्द्रो नृवत्**[6] इति संहितायां पठ्यते । **महान् । इन्द्रः ।** इति पदपाठः । अत्र **आकारोपधो यकारम्**[7] इति सूत्रेण पूर्वपदान्तस्य नकारस्य यकारो विधीयते । एवं च **अनुनासिकमुपधा प्रागन्तस्थायाः**[8] इत्यधिकारात् तत्र उपधास्थाने विद्यमानः आकारः आनुनासिक्यं प्राप्नोति । एवं **महाँय् - इन्द्रः** इति स्थितिः। अधुना, **यवयोः पदान्तयोः स्वरमध्ये लोपः**[9] इति तृतीयकालिकं सूत्रमिदम् । अनेन **महाँय्** इत्यत्र यकारस्य लोपो विधीयते । एवं यकारस्य लोपः प्रवृत्तः । अधुना **महाँ - इन्द्रः** इति स्थितिः । अत्र हकारादाकारस्य एवं इकारस्य च सन्निधिः प्राप्तः । तेन **कण्ठ्यादिवर्ण एकारम्**[10] इति सूत्रेण आकार-इकारयोः एकः एकारः विधीयते। तच्च सूत्रं द्वितीयकालिकम्। अतः परकालिकसूत्रप्रयुक्तयलोपानन्तरं पूर्वकालिकसूत्रप्रयुक्तः एकारादेशसन्धिः न भवति इति **न परकालः पूर्वकाले पुनः** इति सूत्रेण निषिध्यते । अतः अत्र **महाँ इन्द्रः** इति इष्टं रूपं सिद्ध्यति ।

एवमेव **श्वित्र आदित्यानाम्**[11] इति संहितायां पठ्यते । पदपाठे **श्वित्रः, आदित्यानाम्** इति पठ्यते । अत्र **कण्ठ्यपूर्वो यकारमरिफितः**[12] इति सूत्रेण **श्वित्रः** इत्यस्य विसर्गस्य यकारो विधीयते । एवं च **श्वित्रय् आदित्यानाम्** इति स्थितिः। अस्यामवस्थायां **यवयोः पदान्तयोः स्वरमध्ये लोपः**[13] इति सूत्रेण यकारस्य लोपः । एवं यकारे लुप्ते **श्वित्र आदित्यानाम्** इति स्थिते , अकार-आकारयोः **सिं सवर्णे दीर्घम्**[14] इति सूत्रेण सवर्णदीर्घसन्धिः प्राप्तः । किन्तु इदमपि सूत्रं द्वितीयकालिकं भवति। अतः परकालिकसूत्रप्रयुक्तयकारलोपानन्तरं पूर्वकालिकसूत्रप्रयुक्तः

सवर्णदीर्घसन्धिः न भवति इति **न परकालः पूर्वकाले पुनः** इति सूत्रेण निषिध्यते । अतः अत्र **श्वित्र आदित्यानां** इति इष्टं रूपं सिध्यति ।

अत्र केचित् आशङ्कन्ते, ननु **महाँ इन्द्रः** इत्यत्र अनुनासिकविधानसामर्थ्यात् एकारादेशसन्धिः न भवति इत्येव वक्तुं शक्यते । यतः द्वयोः एकारादेशे आनुनासिक्यं न श्रूयेत, तर्हि अनुनासिकविधानं व्यर्थम् । व्यर्थं सत् सन्ध्यभावो ज्ञाप्यत इति , तेनापि इष्टं सिध्यति खलु इति, सत्यम् । किन्तु **श्वित्र आदित्यानाम्** इत्यत्र तादृशज्ञापकत्वासम्भवात् तत्रातिप्रसक्तं सवर्णदीर्घसन्धिं निषेद्धुमावश्यकमिदं । एवं च वाचनिकेनैव निषेधे सम्भवे ज्ञापनपर्यन्तानुधावने गौरवापत्तिश्च ।

उदाहरणान्तरं यथा **तन्त एतमनु**[15] इति संहितायां पठ्यते । पदपाठे **तम् , ते** इति पठ्यते। अत्र **स्पर्शे परपञ्चमम्**[16] इति द्वितीयकालिकसूत्रेण मकारस्य तकारपरकत्वात् नकारो विधीयते । **तन् ते** इति स्थितिः । अस्यामवस्थायां **तथयोस्सम्**[17] इति प्रथमकालिकसूत्रेण तकारपरकत्वे नकारस्य सकारः, **अनुस्वारेण व्यञ्जने**[18] इति अधिकारसूत्रेण उपधास्थाने अनुस्वारागमश्च प्राप्यते। परकालिकसूत्रप्रयुक्त नकारादेशानन्तरं पूर्वकालिकप्रयुक्तौ सकारादेश-अनुस्वारागमौ न भवतः इति **न परकालः पूर्वकाले पुनः** इति सूत्रेण निषिध्यते। एवमेव **अस्मान्त्सीते**[19] **त्रीन्त्समुद्रान्**[20] इत्यादिष्वपि ज्ञेयम् ।

उदाहरणान्तरं यथा **घृतम्वस्य धाम**[21] इति संहितापाठः । **घृतम्, उ, अस्य** इति पदविभागः । अत्र यद्यपि **उकारोऽपृक्तः**[22] इति सूत्रेण **उ** इति पदस्य प्रगृह्यसंज्ञा विहिता । तथापि **प्रगृह्यश्‍ स्वरे**[23] इति सूत्रं बाधित्वा **उकारोऽपृक्तोऽस्पर्शात्**[24] इति सूत्रेण प्रकृतिभावो विधीयते इति कृत्वा तत्र **अस्पर्शात्** इति निषेधात् प्रकृते उदाहरणे स्पर्शात्परत्वमस्तीत्यतः अत्र प्रकृतिभावो न प्रवर्तते । अतः **स्वरे भाव्यन्तस्थाम्**[25] इति द्वितीयकालिकसूत्रेण उकारस्य वकारादेशसन्धिः भवति। एवं च **घृतम् वस्य** इति स्थितिः। अस्यामवस्थायां घृतमिति मकारस्य **अन्तस्थामन्तस्थामनुनासिकां परसस्थानाम्**[26] इति प्रथमकालिकसूत्रेण अनुनासिकवकारादेशे प्राप्ते, **न परकाल** सूत्रेण निषिध्यते ।

एवम् अनेन अप्राप्तवद्भावेन अनिष्टवारणं भवति । एवं च क्वचित् इष्टप्राप्तिरपि दृश्यते । यथा **सौषधीरनु रुध्यसे**[27] इति संहितापाठः । पदपाठस्तु **सः ओषधिः** इति पठ्यते । अत्र पूर्वोक्तरीत्या **सः** इत्यत्र विसर्गस्य **कण्ठ्यपूर्वो यकारमरिफितः**[28] इति सूत्रेण यकारादेशः, एवं तस्य यकारस्य **यवयोः पदान्तयोः स्वरमध्ये लोपः**[29] इति सूत्रेण लोपश्च यदि भवति, तर्हि तत्र **सौषधिरनु** इति इष्टं न सिध्येत् । अतः प्रथमकालिकेन **स ओषधीमयोः** इति सूत्रेण विसर्गस्यैव साक्षाल्लोपो विधीयते । अतः विसर्गस्य लोपानन्तरं **स ओषधीः** इति स्थिते सम्प्रति अकार-ओकारयोः सन्निधिः प्राप्त इति कृत्वा द्वितीयकालिकेन **सन्ध्यक्षर ऐकारौकारौ** इति सूत्रेण औकारादेशसन्धिः भवति । अत्र तु **न परकालेति** निषेधो न भवत्येव । यतः पूर्वकालिकसन्धेः अनन्तरं परकालिकस्य प्रवृत्तिः तेन न निषिध्यते इति ।

एवंरूपेण कात्यायनप्रातिशाख्ये सन्ध्यप्राप्तवद्भावः अनिष्टसन्धिवारणार्थम्, इष्टसन्धिसिद्ध्यर्थं च प्रयुज्यते ।

इति शम्

## अन्त्यटिप्पणी -

1. वाजसनेयिप्रातिशाख्यम् 3-1
2. वाजसनेयिप्रातिशाख्यम् 3-3
3. वाजसनेयिप्रातिशाख्यम् 3-4
4. वाजसनेयिप्रातिशाख्यम् 3-5
5. वाजसनेयिप्रातिशाख्यम् 4-11,4.126
6. काण्वसंहिता 7-39
7. वाजसनेयिप्रातिशाख्यम् 3-143
8. वाजसनेयिप्रातिशाख्यम् 3-131

9. वाजसनेयिप्रातिशाख्यम् 4-127
10. वाजसनेयिप्रातिशाख्यम् 4-54
11. काण्वसंहिता 26-43
12. वाजसनेयिप्रातिशाख्यम् 4-38
13. वाजसनेयिप्रातिशाख्यम् 4-127
14. वाजसनेयिप्रातिशाख्यम् 4-52
15. काण्वसंहिता 2-34
16. वाजसनेयिप्रातिशाख्यम् 4-12
17. वाजसनेयिप्रातिशाख्यम् 3-136
18. वाजसनेयिप्रातिशाख्यम् 3-133
19. काण्वसंहिता 13-71
20. काण्वसंहिता 14-33
21. काण्वसंहिता 19-2
22. वाजसनेयिप्रातिशाख्यम् 1-95
23. वाजसनेयिप्रातिशाख्यम् 4-88
24. वाजसनेयिप्रातिशाख्यम् 4-91
25. वाजसनेयिप्रातिशाख्यम् 4-47
26. वाजसनेयिप्रातिशाख्यम् 4-10
27. काण्वसंहिता 13-37
28. वाजसनेयिप्रातिशाख्यम् 4-38
29. वाजसनेयिप्रातिशाख्यम् 4-127

* * * *

# बह्वृचानाम् उपाकर्मकालविचारः

**डा. अध्यक्षं वेङ्कटरामभरद्वाजः***

**वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः।**
**तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्।।**

मानवः प्रतिनित्यं स्वकीयं वेदोदितं कर्म अवश्यं कुर्यात्। तेन कारणेन सः परमां गतिं प्राप्नोति। तत्कर्मज्ञानं साङ्गवेदाध्ययनेनैव सिध्यति। अतः अवश्यं वेदः अध्येतव्यः। अत एव उच्यते - **ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च**[1] इति महाभाष्यवचनम्।

एवमेव वेदाध्ययनं कर्तुं योग्यतासम्पादनाय सद्गतिप्राप्तये च भगवान् आश्वलायनः पञ्चविंशतिसंस्कारान् उपदिदेश। तेषु उपाकर्म[2] अन्यतमं भवति। अनेन कर्मणा यः संस्क्रियते स एव वेदाध्ययनं कर्तुम् अर्हति। अधीतवेदभाग एव स्वाध्याय इति कथ्यते। **स्वाध्यायोऽध्येतव्यः** इति विधिवाक्यम् अनुसृत्य ब्रह्मयज्ञे स्वाध्यायः अधीयते। नित्यं च ब्रह्मयज्ञम्। तत्र अधीतवेदभागस्य अध्ययनेन इष्टावाप्तिः भवतीति उच्यते।

यथा – **अथापि विज्ञायते स यदि तिष्ठन् व्रजन्नासीनः शयानो वा यं यं क्रतुम् अधीते तेन तेन हास्यक्रतुनेष्टं भवतीति**[3]**।**

उपाकर्मणैव वेदाध्ययनस्य प्रारम्भो भवति। तेन उपाकर्मणः अत्यन्तं प्राधान्यं भवतीति ज्ञायते। अत एव गृह्यसूत्रे उपाकर्मप्रकरणं आरभमाण सूत्रकारः **अथातोऽध्यायोपाकरणम्**[4] इति

---

**"Shevadhih"**, Research Journal of Sri Venkateswara Vedic University, Tirupati. ISSN: 2229-4031, Email: shevadhih@gmail.com Vol-13, 1st & 2nd issues - January to December 2021, Vol-14, 1st & 2nd issues - January to December 2022, Pages.53-60.

***** Guest lecturer in Aswalayana Pourohitya, SV Vedic University, E-mail: avrb1991@gmail.com

सूत्रयति। अस्य सूत्रस्य विवरणं कुर्वन् वृत्तिकारश्च **अध्यायानाम् अध्यायः तस्योपाकरणं प्रारम्भो येन कर्मणा तदध्यायोपाकरणम्** इति विवृणोति। अर्थात् वेदाध्ययनस्य आरम्भः अनेन कर्मणैव भवतीति।

**उपाकर्मकालनिर्णयः**

भगवता आश्वलायनेन उपाकर्मणः कालत्रयम् उक्तं भवति। यथा –

1. प्रथमं तावत् श्रावणमासे ओषधीनां प्रादुर्भावे सति श्रावणमासस्य श्रवणनक्षत्रे उपाकर्म कर्तव्यम्।
2. द्वितीयं तावत् यदा श्रावणमासे वृष्ट्यभावात् ओषधीनां प्रादुर्भावो न स्यात्, तदा भाद्रपदमासस्य श्रवणनक्षत्रे उपाकर्म कर्तव्यम्। इति ।

**श्रवणनक्षत्रकालविशेषः**

अत्र श्रवणनक्षत्रं सूर्योदयात् परं घटिकाद्वयपर्यन्तं यदा वर्तते, तस्मिन्नेव दिने उपाकर्म कर्तव्यमिति उच्यते प्रयोगपारिजातकारेण यथा

**उदयव्यापि यच्चैव विष्ण्वर्क्षं घटिकाद्वयम् ।**
**तत् कर्म सफलं ज्ञेयं तस्य पुण्यमनन्तकम्**[5] ।। इति

एवञ्च तस्मिन् दिने क्रियमाणम् उपाकर्म सफलं भवति, तेन अनन्तं पुण्यं प्राप्यत इति प्रतिपाद्यते च । अतः यदा सूर्योदयात् परं श्रवणनक्षत्रं घटिकाद्वयं न भवति, तस्मिन् दिने उपाकर्म नाचरणीयमिति ज्ञायते।

दिनद्वयव्यापिश्रवणनक्षत्रविषये विशेषमाह व्यासः

**धनिष्ठासंयुते कुर्यात् श्रावण्यां कर्म यद्भवेत् ।**
**तत् कर्म सफलं ज्ञेयम् उपाकरणसंज्ञितम् ।।**

**श्रवणेन तु तत् कर्म ह्युत्तराषाढसंयुतम्।**
**संवत्सरकृतोऽध्यायः तत्क्षणादेव नश्यति**[6]।।

अनेन यदा श्रवणनक्षत्रं दिनद्वयव्यापि दृश्यते, तदा धनिष्ठानक्षत्रसंयुक्तद्वितीयदिने एव कर्तव्यम्। उत्तराषाढनक्षत्रसंयुक्तं दिनं त्याज्यम् अन्यथा संवत्सरपर्यन्तं कृतम् अध्ययनं निष्फलं भवतीति ज्ञायते।

पूर्वं कालत्रयमित्युक्तम्। तत्र कालद्वयं, तत्र प्रसक्तं कालनिरूपणञ्च कृत्वा सम्प्रति तृतीयः कालः निरूप्यते।

03. श्रावणमासे पञ्चमी यदा हस्तेन युज्यते, तदा उपाकर्म कर्तव्यमिति।

अत्र केचन केवलहस्तनक्षत्रदिने, केवलपञ्चम्याम् उपाकर्म कुर्वन्तः सन्ति। तत्तु चिन्त्यम्। वाजसनेयविषयत्वात्। पारस्करगृह्यसूत्रस्य हरिहरभाष्ये कालविषयनिरूपणावसरे **अन्ये तु कालचतुष्टयमाहुः, कथम्** ? 1. **श्रवणेन वा**, 2. **श्रावण्यां पौर्णमास्यां वा**, 3. **श्रावणस्य पञ्चमीं वा**,
4. **हस्तेन वा भवति** इति दृश्यते[7]।

यद्यपि लघ्वाश्वलायनस्मृतौ **श्रवणे स्यादुपाकर्म हस्ते वा श्रावणस्य तु**[8] इति आश्वलायनेन उक्तं दृश्यते। तथापि

**आश्वलायनगृह्यसूत्रे – पञ्चम्यां हस्तेन वा** इति सूत्रितम्। तस्य वृत्तौ **श्रावणमासस्य पञ्चमी यदा हस्तेन युज्यते, तदा वा इत्यर्थः**[9] इति दृश्यते। एवञ्च भाष्येऽपि **यद्वा श्रावणस्य मासस्य पञ्चम्याम् एतत् कर्म कर्तव्यम्। सा यदि पञ्चमी हस्तेन युज्यते**[10] इति दृश्यते।

**आश्वलायनगृह्यकारिकासु – अध्यायानाम् उपाकर्म श्रावण्यां श्रवणेन तु। तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते**[11]।। इति दृश्यते। अत्र हस्तयुक्तायां पञ्चम्यां इत्यत्र विशेषणविशेष्यभावः अङ्गीकर्तव्यः। वाशब्दस्तु पूर्वोक्तेन **श्रावण्यां श्रवणेन** इति वाक्येन विकल्पसिद्ध्यर्थम्। अन्यथा **हस्तयुक्तायाम्** इति युक्तशब्दस्य निरर्थकत्वात्।

**विमलोदयमालायाम् – श्रावणमासस्य पञ्चमी वा तिथिः यदा हस्तेन युज्यते**[12] इति दृश्यते।

**स्मृतिरत्ने - प्रशस्तं श्रवणर्क्षं स्यात् बह्वृचानामुपाकृतौ। तदभावेऽथवा हस्तः पञ्चम्या सहितो वरः**[13]।। इति दृश्यते।

एवम् एतेषु चतुर्ष्वपि ग्रन्थेषु हस्तनक्षत्रयुक्तपञ्चम्याम् एव उपाकर्म कर्तव्यमिति उक्तं पूर्वोक्तलघ्वाश्वलायनस्मृत्युक्तिरपि एवंप्रकारेणैव योजनीयम्। अतः **श्रवणे स्यादुपाकर्म हस्ते वा श्रावणस्य तु** इति लघ्वाश्वलायनोक्तौ अपि पञ्चमीयुक्तहस्ते इति स्वीक्रियते। तेन हस्तनक्षत्रयुक्तपञ्चम्याम् एव उपाकर्म कर्तव्यमिति निष्कर्षार्थः।

अत्र उक्तरीत्या यदा श्रावणमासे वृष्ट्यभावात् ओषधीनां प्रादुर्भावो न स्यात्, तदा भाद्रपदे मासे उपाकर्म कर्तव्यम् इति निरूपितम्। परन्तु भाद्रपदे मासेऽपि यदि वृष्ट्यभावः स्यात् तदा तुल्यन्यायात् आषाढे आश्वयुज्यां वा उपाकर्म कर्तव्यमिति आपततीति चेत् तन्न, ओषधीनामप्रादुर्भावादपि श्रावणमासानन्तरं भाद्रपदमासस्य एव अधिकारः। यतः वर्षर्तौ एव उपाकर्म कर्तव्यम्। तदुच्यते –

**वर्षासूपाकृतिः कार्या द्विजमात्रैर्यथाविधि**[14]।
**यदि वर्षासु वृष्टीनामभावो विद्यते क्वचित्।**
**तदापि बह्वृचानां तु वर्षर्तौ स्यादुपाकृतिः**[15]।। **इति**

अतः पूर्वं यदाशङ्कितं वर्षाभावे आषाढे आश्वयुज्यामिति तन्निरस्तम् ।

**ग्रहणादिसम्भवे उपाकर्मकालनिर्णयः**

तथा च श्रावणमासस्य श्रवणनक्षत्रे ग्रहणादिसम्भवे श्रावणमासस्य हस्तनक्षत्रयुक्तपञ्चम्यां उपाकर्म कर्तव्यम्। यदि हस्तनक्षत्रयुक्तपञ्चमी श्रावणमासे न स्यात्, तदा भाद्रपदे मासे श्रवणनक्षत्रे एव कर्तव्यम्। सोऽपि गुरुशुक्रमौढ्यादिभिः निन्द्यो भवति चेत्, तदा आषाढे, आश्वयुज्यां, कार्तिकमासे वा उपाकर्म कर्तव्यम्। तदुच्यते **स्मृतिरत्ने** –

**मलमासादिमासानाम् उद्भवे तु शरत्स्वपि**[16]।
**अध्वर्युभिः बह्वृचैश्च कार्यैव स्यादुपाकृतिः**[17]।

**श्रवणर्क्षे यदा राहुः ग्रसते चन्द्रमण्डलम्[18]।**
**तदा श्रवणहस्तेन कुर्याद्वा मासि चोत्तरे[19]।।** इति

**तथा च लघ्वाश्वलायनस्मृतौ –**

**ग्रहदोषादुपाकर्म प्रथमं न भवेद्यदि।**
**उक्तकालेऽथ वाऽऽषाढे कुर्याच्छरदि वाऽपि वा[20]।।** इति

अयं कालनिर्णयः प्रथमोपाकृतिविषयः। तदुच्यते पारिजातकारेण

**गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा।**
**तथाधिमाससंसर्पमलमासादिषु द्विज ।।**
**प्रथमोपाकृतिर्न स्यात् कृतं कर्म विनाशकृत्[21]।।** इति

नित्यकर्मवत् द्वितीयादि उपाकर्म कर्तव्यम् इति स्मृतिसारसमुच्चयवाक्यं प्रयोगपारिजाते भवति।

**यज्ञोपवीतं कर्तव्यं श्रावणे गुरुशुक्रयोः।**
**मौढ्येऽपि वार्धके बाल्ये नित्यवत् कर्म चोदितम्[22]।।**

**स्मृत्यन्तरे च -**

**नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च।**
**उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते[23]।।** इति

एवमुक्तप्रकारेण यथाकालम् उपाकर्म कर्तव्यम्। तदन्यत्र न कर्तव्यम्। तदुच्यते लघ्वाश्वलायनेन -

**अकाले नैव तत् कुर्यात् उपाकर्म कथञ्चन।**

एवम् उक्तप्रकारेण **ज्ञात्वा कर्माणि कुर्वीत** इतिवत् उपाकर्मकालं विज्ञाय यथोक्तं कर्तव्यम्।

मातापित्रोः संवत्सरदीक्षाकाले उपाकर्मानुष्ठानमस्ति वा न इति। न भवति।

## अन्त्यटिप्पणी -

1. व्या-महा-पस्पशाह्निके
2. गर्भाधानं पुंसवनं सीमन्तो बलिरेव च। नामनिष्क्रमणं पश्चादन्नप्राशनमेव च।।
   चौलकर्मोपनयनं व्रतानां च चतुष्टयम्। स्नानोद्वाहौ चाग्रयणमष्टका च यथातथम्।।
   श्रावण्यामाश्वयुज्यां च मार्गशीर्षां च पार्वणम्। उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः।।
   संस्कारनियताश्चैते ब्राह्मणानां विशेषतः। ( स्मृ-र-11अ,04श्लोकात् 07 श्लोकपर्यन्तम् )
3. आश्व-गृ-सू- 03अ, 04कं, 06सू
4. आश्व-गृ-सू- 03अ,05कं,01सू
5. प्र-पा- 246 पु
6. प्र-पा-247पु
7. पा-गृ-सू-02का, 10क हरिहरभाष्यम्
8. ल- आश्व-स्मृ-
9. आश्व-गृ-सू-03अ,08कं,03सू
10. आश्व-गृ-सू-हरदत्तभाष्ये-03अ,08कं,03सू
11. आश्व-गृ-का-1अ,उपाकर्मप्रकरणे,01श्लो
12. विम-मा-139पु
13. स्मृ-र-05अ,502श्लो
14. स्मृ-र- 11अ, 490श्लो
15. स्मृ-र- 11अ, 499,450श्लो

*बह्वृचानाम् उपाकर्मकालविचारः*

16. स्मृ-र- 11अ, 501श्लो
17. स्मृ-र-11अ, 502श्लो
18. स्मृ-र-11अ,519श्लो
19. स्मृ-र-11अ,520श्लो
20. ल-आश्व-स्मृ-12अ,02श्लो
21. प्र-पा-247पु
22. प्र-पा-247पु
23. प्र-पा-247पु

## सङ्केताक्षरग्रन्थसूची

| ग्रन्थाः | सङ्केताः |
|---|---|
| प्रयोगपारिजातम् | प्र-पा |
| आश्वलायनगृह्यसूत्रम् | आश्व-गृ-सू |
| आश्वलायनगृह्यकारिका | आश्व-गृ-का |
| स्मृतिरत्नम् | स्मृ-र |
| विमलोदयमाला | विम-मा |
| पारस्करगृह्यसूत्रम् | पार-गृ-सू |
| लघ्वाश्वलायनस्मृतिः | ल-आश्व-स्मृ |
| व्याकरणमहाभाष्यम् | व्या-महा |

## सहायकग्रन्थसूची


| ग्रन्थनाम | सम्पादकः | प्रकाशकः | संवत्सरः |
|---|---|---|---|
| 1. प्रयोगपारिजातम् | नान्दूरकर् | अनमोल्प्रकाशन् | 2012 |
| 2. आश्वलायनगृह्यसूत्रम् | दिनकरशर्मा | चौखाम्बा | 2013 |
| 3. आश्वलायनगृह्यकारिका | दिनकरशर्मा | चौखाम्बा | 2013 |
| 4. स्मृतिरत्नम् | वेङ्कटेशभट्टः | मैसूर् | 1924 |
| 5. विमलोदयमाला | केशवपाण्डुरङ्गजोग् | पूने | 1974 |
| 6. पारस्करगृह्यसूत्रम् | सन्निधानंसुदर्शनशर्मा | तिरुपतिः | 2012 |
| 7. लघ्वाश्वलायनस्मृतिः | मुदिगोण्डवेङ्कटजयरामशर्मा | तिरुपतिः | 2016 |
| 8. व्याकरणमहाभाष्यम् | मोतीलाल् बनारसीदास् | दिल्ली | 2015 |


* * * *

# ।। सामवेदीय-अग्निष्टोमस्य प्रवर्ग्यसामगानं विधिश्च ।।

Surya Prakash Ojha *

**अग्निष्टोमः-**

**ज्योतिष्टोमेन स्वर्गकामो यजेतेति**[1] वाक्यविहितज्योतिष्टोमनामकयागविशेषस्य गुणविकारोऽग्निष्टोमो नाम । तस्य कालो वसन्तः। तत्राधिकारी अधीतवेद आहिताग्निश्च । द्रव्यं सोमः। देवता इन्द्रवारवादयः। ऋत्विजः षोडश। तेषाञ्च चत्वारो गणाः। १ होतृगणः २ अध्वर्य्युगणः ३ ब्रह्मगणः ४ उद्गातृगणः । एकैकस्य गणस्य चत्वारश्चत्वारः ऋत्विजः। तत्र **१ होतृगणे** होता २ प्रशास्ता ३ अच्छावाकः ४ ग्रावस्तोता। **अध्वर्य्युगणे** १ अध्वर्य्युः २ प्रतिप्रस्थाता ३ नेष्टा ४ उन्नेता । १ **ब्रह्मगणे** ब्रह्मा २ ब्राह्मणाच्छंशी ३ अग्नीत् ४ पोता । **उद्गातृगणे** १ उद्गाता २ प्रस्तोता ३ प्रतिहर्त्ता ४ सुब्रह्मण्यः। स च पञ्चाहसाध्यः। प्रथमदिने दीक्षा दीक्षणीयादितदङ्गानुष्ठानम्।तत्र द्वितीयदिवसे प्रायणीययागः सोमलताक्रयणम्। ततो द्वितीय-तृतीयचतुर्थदिवसेषु प्रातःकाले सायंकाले च **प्रवर्ग्योपसन्नामकयागानुष्ठानम्**। चतुर्थदिवसे प्रवर्ग्योद्वासनानन्तरम् अग्नीषोमीयपश्वनुष्ठानम्। तत्र यस्य यजमानस्य गृहे पितृपितामहप्रपितामहानां मध्ये केनापि वेदो नाधीतोऽग्निष्टोमो वा न कृतः स दुर्ब्राह्मणो भवति। तस्य दौर्ब्राह्मण्यपरिहारायाश्विनपशुः कर्त्तव्यः। यस्य यजमानस्य पितृपितामहप्रपितामहानां मध्ये केनापि सोमपानं न कृतं स्यात् तस्य सोमपान- विच्छेददोषपरिहारार्थमैन्द्राग्नपश्वनुष्ठानं कर्त्तव्यम् ।

---

**"Shevadhih"**, Research Journal of Sri Venkateswara Vedic University, Tirupati. ISSN: 2229-4031, Email: shevadhih@gmail.com Vol-13, 1st & 2nd issues - January to December 2021,
Vol-14, 1st & 2nd issues - January to December 2022, Pages.61-67.

* Guest Lecturer, Department of Samaveda (Kouthuma), S.V. Vedic University (A.P),
E-mail: suryaojha.gov@gmail.com

इत्थं त्रयाणां पशूनां युगपदालम्भपक्षे एकस्मिन्नेव यूपे त्रयाणां पशूनां बन्धनम् । इत्थं पशुत्रयानुष्ठानं चतुर्थदिवसे तस्मिन्नेव दिने वा तृतीयभागे उत्थाय प्रयोगारम्भः कार्य्यः। तत्र पात्रासादनम्। पात्राणि च ग्रहाश्चमसाः स्थाल्यश्चेति। तत्र ग्रहपात्राणि वितस्तिमात्राणि उलूखलाकाराणि। ऊर्द्धपात्राणि चमसपात्राणि तावत्परिमितान्येव तिर्य्यगाकृतीनि कोणचतुष्टयविशिष्टानि धारणार्थदण्डयुक्तानि । स्थाल्यो मार्त्तिक्यः । तत आरभ्य सोमलताकण्डनेन सोमरसं निष्कास्य ग्रहैश्चमसैश्च होमः कर्त्तव्यः । तत्र सूर्य्योदयानन्तरम् आग्नेयपशुयागः कर्त्तव्यः । एवमुक्थ्यपर्य्यायान्ते कृते प्रातःसवनसमाप्तिः ।ततो माध्यन्दिनसवनम्। तत्र दक्षिणा दानम्।दक्षिणा च द्वादशोत्तरशतं गावः।ततस्तृतीयसवनम् इत्थं प्रातःसवनमाध्यन्दिनसवनतृतीयसवनरूपसवनत्रयात्मकः अग्निष्टोमः प्रधानयागः। इतरेऽङ्गयागाः। तृतीयसवनसमाप्त्युत्तरमवभृथयागः। उदके वरुणदेवताकपुरोडाशहोमः । तदनन्तरमनुबन्ध्या पशुयागः। तत्र गौः पशुः। तस्य कलिनिषिद्धत्वात् तस्य च नित्यत्वात् तत् स्थाने आमिक्षायागः। तत उदयनीया तत उदवसानीया ।सा च पञ्चमदिवसे यावद्रात्रि कर्त्तव्या । तत्समाप्तावग्निष्टोमयागसमाप्तिः।

अग्नेः स्तोमः **स्तुतिसाधनं तृचसमुदायोऽवसानेऽत्र**। यागविशेषे स च यागः ताण्ड्यमहाब्राह्मणे षष्ठाध्याये **प्रजापतिरकामयत बहुस्यां प्रजायेयेति स एतमग्निष्टोममसृजत-इत्युपक्रम्य एष वाव यज्ञो यदग्निष्टोम इति एकस्मा अन्यो यज्ञः कामायाह्रियते सर्व्वेभ्योऽग्निष्टोम** इति चाग्निष्टोमं स्तुत्वा द्वादशस्तोत्राण्यग्निष्टोम इत्यादिना सप्रपञ्चं दर्शितः।

अग्निष्टोमशब्दस्य व्युत्पत्तिर्भाष्यकृता सायणाचार्य्येण दर्शिता यथा यज्ञायज्ञीय इत्यस्यामाग्नेय्यामुत्पन्नेन अग्नेष्टोमसाम्ना समाप्तेरग्निष्टोम इति नाम सम्पन्नमिति। तद्विधान परिपाटी च बौधायनीये केशवस्वामिना दर्शिता तत एव साऽवगन्तव्या। ताण्ड्ये षष्ठाध्याये च **"अग्निष्टोमे द्वादश स्तोत्राणि द्वादश शस्त्राणि"** इत्युक्त्वा अष्टमाध्यायपर्य्यन्तं यानि स्तोत्राणि शस्त्राणि वा

प्रयोज्यानि तान्यभिहितानि तानि च तत एवावगन्तव्यानि। तेषां स्वरूपादि तत्तच्छब्दार्थे वक्ष्यते **तत्र अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम्। प्रगीतमन्त्रसाध्या तु स्तोत्रमिति तयोर्भेदः।** एकाहसाध्ये अग्निष्टुन्नामके यज्ञे च तत् प्रमाणम् अग्निष्टुच्छब्दे। अग्निष्तोमस्य व्याख्या नः कल्पः ठक्। आग्निष्टोमिकः अग्निष्टोमबोधककल्पे।

**प्रवर्ग्यसामगानम् -**

अथ प्रस्तोता प्रेषितः पूर्ववत् पश्चात् गार्हपत्यस्योपविश्य प्रवर्ग्यसामानि गायेत् । जैमिनिश्चाह - **यज्ञोपवीतम् कृत्वाप आचम्यान्तरेण वेद्युत्करौ प्रपद्यापरेण होतारं परीत्य दक्षिणतो धर्ममभिमुख उपविश्य वामदेव्येन मदन्तीभिः शान्तिं कुरुते** ।[2]

इति तत्र यदा- **अग्रेणीरसि स्वावेश उन्नेतृणामेतस्य वित्तादधि त्वा स्थास्यति देवस्त्वा सविता मध्वानक्तु सुपिप्पलाभ्यस्त्वौषधीभ्यः**[3] इति महावीर मञ्जन्ति तदा हावांज[4] इति । शार्ङ्गः त्रिर्गायेत् कक्षीवान् ऋषिः, जगती छन्दः, धर्मो देवता, सर्वेषां प्रवर्ग्यसाम्नां धर्मो देवता। **रजतोपधानकाले हाउहाउहाउ । शुक्रम् नियुत्वा**[5] इति । शुक्रं गायेत् प्रजापतिर्गायत्री धर्मः, प्रज्वलनकाले **कप्रसोमदेवेवीतये**[6] इति । धर्मस्य तन्वौ धर्मः प्रजापतिः बृहती । जातरूपोपधानकाले **हाउहाउहाउ । चन्द्रम्**[7] इति । चन्द्रः प्रजापतिर्गायत्री अथ केचिदाहुः- **आभिरूप्यात् कर्तव्यानीत्येके**[8] आभिरूप्यं नाम लिङ्गं तस्मादाभिरूप्यात्कर्त्तव्यानि श्रुतिर्नास्ति एवमेके आचार्य्या ब्रुवते इति । सूत्रकारेण परिसाम्नां ब्राह्मणविधानाभावेऽपि आभिरूप्यात् गानं विहितम् । तच्चाभिरूप्यमन्येषामप्यभिरूपाणां साम्नाम् अविशिष्टमिति चन्द्रादनन्तरमवसरे सत्यन्यान्यपि धर्मलिङ्गानि सामानि गायेत् । तद्यथा- गायमान[9] इति । महावैश्वानरव्रतम् । वैश्वानरो बृहती, **हाउहाउहाउ । सहोभ्राज**[10] इति इन्द्रस्य च सधस्थम् । **इन्द्रस्त्रिष्टिप्, विष्णोस्त्रीणि स्वरीयांसि पञ्चानुगानं द्वयानुगानं चतुरनुगानं च**[11] इति । विष्णुस्त्रिष्टिप्, एवमन्यान्यपि धर्मलिङ्गानि द्रष्टव्यानि । वयं तेषामन्येषामिव परिसाम्नां सूत्रे प्रतिपादनविध्यभावात् प्रतिहारे अनुपादानाच्च न कर्तव्यं गानमित्यवोचाम । रुचतो धर्म इत्युक्ते- **उद्यँल्लोकमरोचयः। होइ**[12] इति धर्मरोचनं गायेत्।

धर्मोऽनुष्टुप्, अपश्यं गोपाम् (गर्भो देवानाम्) इत्यक्तेऽनुवाकेन तिष्ठन्तोऽवेक्षेरन् । **रुचितो धर्म इत्युक्तेऽनुवाकेन तिष्ठन्तोऽवेक्षेरन् यमध्वर्युर्ब्रूयात्**[13] इति । ब्रह्मत्वे बहुवचनेन विधानादिति केचित्। तदप्यौद्गात्रप्रकरणे विहितं न भवतीति तानूनप्त्रस्पर्शादिवन्न कर्तव्यमित्यन्ये । गङ्ग एहीत्युक्त्वा यदा धेनुमवसृजन्ति तदा- **हाउहाउहाउ।ओहा।(द्विः)।ओहाइ।इयाहाउ।(त्रिः) स्वादिष्ठया**[14] इति । धेनुसाम गायेत्, प्रजापतिर्गायत्री, तस्य सामान्तवद्वान्तं स्तोभमुक्त्वा भुवत् । इडेति देवतापदं स्वादिष्ठयेति ऋक्पादं च ब्रूयात् । एवं द्वितीयं देवतापदं ऋक्पादं च । तथा तृतीयम् । पुनश्च वान्तं स्तोभमुक्त्वा करदिडेत्यादि ब्रूयादित्येकः पक्षः । अन्यत्तु पक्षद्वयं सूत्रोक्तं विस्तरभयान्न लिखितम् । यदा पय आहरन्ति तदा **इयोऽ३।इया। अग्ने युङ्क्ष्वाहीऽ३येतवा**[15] इति पयो गायेत् । प्रजापतिर्गायत्री । आसेचनकाले **आत्वाविशन्त्विन्दा ऽ६वाः।समुन्द्रमिव सिन्धवः**[16] इति सिन्धुषा । सिन्धुर्गायत्री, शफाभ्यां परिग्रहणकाले **हाउप्राथाः।।चयस्यसप्रथः**[17] इति वशिष्ठस्य शफौ वशिष्ठस्त्रिष्टुप् । हीयमाणे घर्मे **हाउहाउहाउ। ह३ह३ह३ह३। इन्द्रन्नरो**[18] व्रतपक्षौ, प्रजापतिस्त्रिष्टुप्, पूर्वरौहिणपुरोडाशाचरणकाले **हाउहाउहाउ।ह३ह३ह३। इन्द्रन्नरो**[19] इति राजनम् । इन्द्रस्त्रिष्टुप् धर्मे होइडा इमाउवां[20] इत्यश्विनोर्व्रते, अश्विनो बृहती, उत्तररौहिणाचरणकाले **हाउहाउहाउ।आइही। इन्द्रन्नरोनेमधिताहवाऽ२न्ताइ**[21] इति रौहिणम् इन्द्रस्त्रिष्टुप् । धर्मोपकरणानि सम्राडासन्द्यां समारोपयन्ति । तदा इति आरूढवदाङ्गिरसः त्रिर्गायेत् । ऊपास्थाने सुवा इति निधनम् । अङ्गिरसोऽनुष्टुप् । **शार्ङ्गारूढवदाङ्गिरसेवा(द्वे)त्रिरभ्सस्येदन्तरापराचा**[22] अञ्जन्ति धर्म तत्र शार्ङ्गमित्यादिना प्रवर्ग्यसामानि वक्ष्यति। तत्र प्रथमं साम शार्ङ्गसंज्ञकम् । आरूढवदाङ्गिरसमुत्तमं साम एते एव द्वे सामनी प्रवर्ग्यप्रचारे त्रिरभ्यस्येत् ।प्रवर्ग्यसाम्नामा- द्यन्तयोस्त्रिर्गानमुक्तम्, इतरेषां सकृत्, एतानि सामानि प्रतिप्रवर्ग्यं गायेत् । सर्वेषूपसदन्तेषु आतिथ्यान्तवत्सोमाप्यायनं निह्नवनं सुब्रह्मण्याह्वानं च कार्यम् । अपराह्णे निह्नवने सव्यं पाणिमुत्तानं दक्षिणं न्यञ्चं कृत्वेति विशेषः।प्रवर्ग्योद्वासनकाले प्रस्तोता सम्राडासन्दीमुत्तरेण गत्वा पश्चात्तिष्ठन् अध्वर्युप्रेषितः **त्यग्नाइः।प्रतिदहति**[23] इति प्रवर्ग्यसाम गायेत् । स्तोभान् प्रतिपदमुक्त्वा निधनायैववाइ इति

ब्रूयात्। ए विश्वमित्यादि त्रिणि निधनानि मन्द्रस्वरातं कर्षन्तो धर्मोपयुक्ताः सर्वे पत्नी च ब्रूयुः । बृहस्पतिरत्यष्टिरग्निः । एवं मध्ये आहवनीयस्थाने च गायेत् । तत्रास्य स्थानत्रये सकृत् सकृद्गाने समुदायसिद्धं त्रिर्गानम् । न तु प्रतिस्थानं त्रिर्गानम् । तथा च तस्यां त्रिवृद्यथा प्रथमस्य प्रवर्ग्यसाम्नः प्रयोगे अवभृथसाम्नोऽतिदिष्टे तस्य त्रिर्वचने एकविंशतिः पदानि[24] इति श्रुत्युक्तमेकविंशतिपदत्वं तस्योपपद्यते । नान्यथा परिषिच्यमाने च आहवनीये परिषेकजलमुपस्पृश्य **अचिक्रदाऽ३त्।**[25] वार्षाहरं त्रिर्गायेत् । वृषाहरिर्गायत्री सूर्यः । परिषिक्ते **इष्टहोत्राः।आसृक्षाऽ२३४ता**[26] त्रिर्गायेत् । अप्सरसो गायत्रीन्द्रः । तस्य सर्वे पूर्ववन्निधनं ब्रूयुः। प्रत्याव्रजन् **अभिप्रवस्सुरा । धसाऽ३४औहोवा**[27] एवं श्येतं सामऽपि त्रिर्गायेत्।प्रजापतिर्बृहतीन्द्रः।तृचे वैकस्यां वा यजमानो निधनमनूपेयात् । यदैकस्यां तदा आद्यायां ब्रूयात् । अन्त्यायां इति केचित् । पूर्वया द्वारा प्रपद्योत्तरेणाग्नीन् गत्वा पश्चात् गार्हपत्यस्य तिष्ठन् प्रवर्ग्यस्थानं प्रेक्षमाणो **वामदेव्यं-काऽ५या**[28] तृचे गायेत् । वामदेवो गायत्रीन्द्रः । अथाग्निप्रणयने अग्निमनुगच्छन् **हाउहाउहाउ।भ्राजाओवा अग्निर्मूर्द्धा**[29] इति अग्नेर्व्रतं त्रिर्गायेत् । अग्निर्गायत्र्यग्निः।।

**सन्दर्भग्रन्थसूची-**

1. **लाट्यायनश्रौतसूत्रम्-** चौखम्बा संस्कृत संस्थान, वाराणसी
2. **आर्षेयब्राह्मणम्-** स्वामी श्री अखण्डानन्द पुस्तकालय मथुरा (उत्तरप्रदेश)
3. **जैमिनीश्रौतसूत्रम्-** Maharishi university of Management Vedic Literature Collection.
4. **वाजसनेयिसंहिता-** क्षेमराज श्रीकृष्णदासश्रेष्ठिना, मुम्बय्यां
5. **द्राह्यायणश्रौतसूत्रम्-** सर् सि.पि. रामस्वाम्यार्य धर्मनिधिना प्राकाश्यं नीतम्, विजयतेतराम् 1982

6. **षड्विंशब्राह्मणम्-** डा०गिरिजाप्रसाद षडङ्गी (तिरुपति)
7. **ऊहगानम्-** डा०गिरिजाप्रसाद षडङ्गी (तिरुपति)
8. **सामवेदसंहिता-** स्वामी सदानन्द सरस्वती शारदापीठम्, द्वारका-361335 जामनगर, गुजरात

## अन्त्यटिप्पणी -

1. आपस्तम्बश्रौतसूत्रम् 102.1
2. जैमिनीश्रौतसूत्रम्. 24.2
3. वाजसनेयिसंहिता.6.2
4. ग्रामगेय.गानम्.26.9.5.643
5. आरण्य.गानम्.3.6.148
6. आरण्य.गानम् 2.2.104-5
7. आरण्य.गानम् 3.6.149
8. लाट्यायनश्रौतसूत्रम्.1.6.16
9. आरण्य.गानम् 6.1.214
10. आरण्य.गानम्.6.2.274
11. आर्षेयब्राह्मण.6.2..73-4
12. आरण्य.गानम् 279
13. लाट्यायनश्रौतसूत्रम् 5.7.2

14. आरण्य.गानम् 118
15. आरण्य.गानम् 119
16. आरण्य.गानम्.5.9.197.1
17. आरण्य.गानम् 146-147
18. आरण्य.गानम्.94-95
19. आरण्य.गानम्.204
20. आरण्य.गानम्.181-2
21. आरण्य.गानम्.206
22. द्राह्यायणश्रौतसूत्रम्.2.1.3
23. ग्रामगेय.गानम्12.12.465.4
24. षड्विंशब्राह्मणम्.3.4.20
25. ग्रामगेय.गानम्.14.4.497.1
26. ग्रामगेय.गानम्.4.4.151.1
27. ग्रामगेय.गानम्.6.1.335.3
28. ऊहगानम्.1.5
29. आरण्य.गानम्.251

* * * *

# ऋग्विधानस्य लोकोपकारकत्वम्

**डा.बि.वि.श्रीनाथाचार्यः** *

अस्मिन्प्रपञ्चे चतुरशीतिलक्षात्मकजीवराशिः उद्भवति इति शास्त्रद्वारा विदितमेव। तेषु सर्वेषु जन्मसु मानवजन्मैव उत्कृष्टं भवति। यतः इति हितोपदेशकारैः कथ्यते -

**आहारनिद्राभयमैथुनं च समानमेतत् पशुभिर्नराणाम्।**
**धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिस्समानाः**[1]।। **इति**

तस्मात्मानवजन्मसफलीकरणाय वेदोक्तधर्माः सदाचाराः च अवश्यम् आचरणीयाः भवन्ति। तेषामाचरणेन अवश्यं जन्मसाफल्यं भवति। धृतिक्षमादिगुणा एव धर्मशब्दवाच्यत्वेन निर्दिष्टाः । मन्वादिभिः ऋषिभिः तादृशस्य धर्मस्य आधाररूपेण कृत्स्नस्य वेदस्य प्रतिष्ठा विहिता। वेदास्तु धर्ममूलतयैव सर्वथा समादृता भवन्ति। मनुवचनम् यथा –

'**वेदोऽखिलो धर्ममूलं स्मृति-शीले च तद्विदाम्**।[2] इति

वेदार्थप्रकाशकेषु अग्रगण्यैः सायणाचार्यैः स्वकीयभाष्यरचनावसरे वेदशब्दस्य निर्वचनम् एवम् उक्तम् **इष्टप्राप्त्यनिष्टपरिहारयोः अलौकिकम् उपायं यः ग्रन्थः वेदयति सः वेदः** इति। एतादृशः न कोऽप्यस्ति अलौकिकोपायबोधकः दृश्यते।। तस्य प्रमाणमपि तत्रैवोक्तम् -

---

**"Shevadhih"**, Research Journal of Sri Venkateswara Vedic University, Tirupati. ISSN: 2229-4031, Email: shevadhih@gmail.com Vol-13, 1st & 2nd issues - January to December 2021, Vol-14, 1st & 2nd issues - January to December 2022, Pages.68-73.

* अथर्वणवेदभाष्याध्यापकः, श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपतिः E-mail: sridvivedi@gmail.com

**"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।**[3]

वेदस्तु वस्तुत एक एवास्ति। ब्रह्मणः निश्वासात् निर्गतस्य वेदस्य अनन्तरूपेण वर्तमानत्वात् अल्पायुषां अल्पमेधोयुक्तानां एकराशित्वेन वर्तमानस्य कृत्स्नवेदस्य अध्ययनम् अशक्यमिति धिया भगवता बादरायणेन चतुर्धा ऋग्यजुस्सामाथर्वणरूपेण विभागः कृतः। उच्यते निरुक्तव्याख्याने '**वेदं तावदेकं सन्तम् अतिमहत्त्वाद्दुरध्येयम् अनेकशाखाभेदेन, सुखग्रहणाय-व्यासो विबभाज**" इति।

तादृशेषु वेदेषु अध्यात्मदर्शनस्य उत्कृष्टभाण्डागारो निक्षिप्तो अस्ति। विश्वसाहित्ये-वेदानां महत्त्वं वैशिष्ट्यं स्पष्टमेव प्रतिभाति। अत्युत्कृष्टं व्यापकञ्च अस्ति वेदानां महत्त्वम्। वैदिक-वाङ्मयस्य महत्तां न कोऽपि सामान्यतया वर्णयितुं समर्थः। अत्र सर्वाङ्गपूर्णतया मानवजीवनोद्देश्यभूताः धर्मार्थकाममोक्षाख्याश्चत्वारोऽपि पुरुषार्थाः विवेचिताः। अतः वैदिकवाङ्मये मानवजीवनोपयोगिनः सर्वेऽपि विषयाः साधु विवेचिताः इति कथनं समुचितमेव। अत एवात्र भोगमोक्षयोः उभयोः सत्तायाः इतरवाङ्मयापेक्षया विशिष्टता विद्यते। अतिमहत्त्वपूर्णमिदं वैदिकसाहित्यम्। इदं प्राचीनतायां-सर्वातिशायीति पूर्वमावेदितमेव। अस्य व्यापकत्वं परिमाणमहत्त्वञ्च प्रसिद्धम्। तस्याऽध्ययनमिह-अवश्यकर्तव्यत्वेन चाभ्युपगतम्।

**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः।।**[4] **इति**

अत एव महाभाष्यकृता पतञ्जलिना ब्राह्मणेन षडङ्गवेदाध्ययनस्य अवश्यकर्तव्यत्व-मुच्यते स्म। तथाहि -'**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।**" इति।

वेदेऽपि विहितः एवम् **स्वाध्यायोऽध्येतव्यः**[5] इति

अस्तु सर्वेष्वपि वेदेषु विविधलोकोपकारकविषयाः आम्नाताः। तेषु सर्ववेदाध्ययन-तत्पारायणब्रह्मयज्ञजपादौ ऋग्वेदस्यैव प्राथम्यम् वर्तते।

'ऋचस्तुतौ" इति धातोः करणार्थे उसिप्रत्यये कृते निष्पन्नः "ऋक्" इति शब्दः। ऋच्यते - स्तूयते, देवता अनया "ऋक्" इति तल्लक्षणम्। मीमांसादर्शनेऽपि – यत्र मन्त्रसमूहे अर्थानुसारं-पादव्यवस्था भवति सा ऋक् इति ऋग्लक्षणं दृश्यते। "यत्र अर्थवशेन पादव्यवस्था" इति। ऋग्वेदेऽस्मिन् देवतास्तुतिरूपाः मन्त्राः दशसहस्राधिकसंख्याकाः विद्यन्ते।

अनेन ज्ञायते ऋग्वेदे विद्यमानाः मन्त्राः सर्वेऽपि स्तुतिरूपाः इति । तादृशानां स्तुतिरूपाणां मन्त्राणां पठनमात्रेण प्राणिनाम् सकलविधैहिकामुष्मिकफलप्राप्तिः भवतु इति धिया शौनकमहर्षिः ऋग्विधानाख्यं ग्रन्थं रचयामास ।

तत्रोच्यते –

**ऋषिभिर्विविधा मन्त्राः दृष्टादृष्टप्रयोजनाः।**
**प्रयोजनाय चोद्दिष्टास्तस्मिंस्तस्मिन् प्रदर्शिताः।।**[6] इति

तत्र विविधफलप्राप्तये तत्तन्मन्त्रपारायणजपादिक्रमः निरूपितः वर्तते। तादृशाणां मन्त्राणां यथाविध्यनुष्ठानेन सकलविधफलप्राप्तिः भवति। तत्र फलानि एवं निरूपितानि –

**आयुः स्वर्गो द्रविणं सूनवश्च चतुर्विधं प्रोक्तमाशास्यमग्रे।**
**अन्ये कामाः शतशः सम्प्रदिष्टाः संस्तुवद्भिर्ऋषिभिर्देवताश्च।।**[7] इति

तच्चैवोच्यते तादृङ्मन्त्रजपपारायणादिरूपेण तपसा ऐहिकामुष्मिकफलम् अवश्यं प्राप्नोतीति–

**तपसा स्वर्गमाप्नोति तपसा विन्दते महत्।**
**तपोयुक्तस्य विन्दन्ति कर्माणि नियतात्मनः।।**[8] इति

तत्र ऋग्विधानग्रन्थे निरूपितेषु सकलविधैहिकामुष्मिकफलप्रदेषु मन्त्रेषु कांश्यन मन्त्रान् विनियोगपुरस्सरं उदाहरामि। यथावकाशम् सर्वेषां प्राणिनां जीवनाय क्षुद्बाधानिवर्तनाय च आहारापेक्षा सर्वदा भवति। तदर्थं कर्षकैः कृषिः करणीयो वर्तते। तत्र अक्षयधान्यलाभाय लौकिकोपायः निरूप्यते एवम् –

**या ओषधीर्जपेत्सूक्तं बीजारोहणसंग्रहे।**
**यदि स्पृष्ट्वा भूमिकुम्भं धान्यं तस्याक्षयं भवेत्।।[9] इति**

यः अक्षयधान्यप्राप्तिम् इच्छति सः बीजारोहणसंग्रहकाले भूमिं स्पृष्ट्वा ऋग्वेदगतं "या ओषधीः" पूर्वा जाता इत्यारभ्यमाणं ओषधिसूक्तं जपेत्।तेन तस्य आजीवनं धान्यसमृद्धिः भवति।

उदाहरणान्तरम् -

**विद्या धनं सर्वधनप्रधानम्, विद्याविहीनः पशुः, विद्वान् सर्वत्र पूज्यते इत्यादिवाक्यैः** विद्ययैव मानवानां उत्तमं भूषणं भवति इत्यवगम्यते। सकलविधश्रेयःप्राप्तिः विद्ययैव भवति। स्मर्यते यथा-

**विद्या ददाति विनयं विनयाद्याति पात्रताम्।**
**पात्रत्वाद्धनमाप्नोति धनाद्धर्मस्ततो जयः ।**[10] इति

तादृशविद्याप्राप्तये उच्यते

**हविष्पान्तं जपेत् सूक्तं महापातकनाशनम्।**
**दिने दिने त्रिवारं तु विद्याश्रीस्तत्कुले स्थिरा**[11]।।

अत्र मन्त्रस्यैकस्यानुष्ठानेन फलबाहुल्यं दृश्यते। ऋग्वेदस्थ **हविष्पान्तम्** इति सूक्तजपेन ज्ञानतो वा अज्ञानतो वा कृतानां ब्रह्महत्याभ्रूणहत्यादिविविधमहापातकानां विनाशो भविष्यति। एवं प्रतिदिनं अस्य सूक्तस्य वारत्रयपारायणं यः करोति तस्य कुले स्थितानां सर्वेषां विद्या, श्रीश्च (धनम्) सुस्थिरा भवति।

एवं इष्टप्राप्त्यनिष्टपरिहाररूपाः ऋग्वेदस्थदशसहस्राधिकाः मन्त्राः अत्र निरूपिताः।

**उपसंहारः**

वेदा न केवलं भारतीयैरपितु वैदेशिकैः विद्वद्भिरपि श्रद्धयावलोकिताः सन्ति। सत्यानुसन्धातृभिः महर्षिभिः अनुभूतस्य परमतत्त्वस्य बोधयितारो भूत्वा भुवि ते विभान्ति। भारतीयपरम्परानुसारं वेदास्त अपौरुषेयाः एव। अतिप्राचीनकालादेव इष्टप्राप्तेरनिष्टपरिहृतेः अलौकिकाः उपायाः तेभ्य एव विदिता जायन्ते। वेदेषु ज्ञान–विज्ञान-धर्म-दर्शन-सदाचार-संस्कृति-नैतिक-सामाजिक-राजनीतिप्रभृतीनां लोकोपयोगिविषयाणां समावेशोऽस्ति। अतः एतेन् **विश्वकोषाः** इत्येव मन्यन्ते विद्वांसः। वेदास्तु अस्माकं श्रेयःप्रेयःप्रभृतीनामपि साधनभूताः। प्राचीनानि धर्म-समाज-व्यवहारप्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते। मानवानां विविधकर्तव्यादिनिर्धारणं वेदे एव उपलभ्यते। मनुना स्मर्यते –

**सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।**
**वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे।।**[12] **इति**

**यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।**
**स सर्वोऽभिहितो वेदे** ***सर्वज्ञानमयो हि सः।। इति***

एवंप्रकारेण शौनकादिमहर्षिभिः ऋग्विधानादिग्रन्थेषु ऋग्वेदस्य लोकोपकारकत्व-प्रतिपादकाः अंशाः बहुधा प्रपञ्चिताः। तेषां अनुष्ठानेन सर्वेषां प्राणिजातानाम् उपकारः सर्वथा भवत्येव इति निश्चप्रचं वच्मि।

इति शम्
कृष्णार्पणमस्तु
।।ओम्।।

## सङ्केताक्षरसूची

| | |
|---|---|
| 1. हितोपदेशः | |
| 2. म.स्मृ | मनुस्मृतिः |
| 3. ऋ.वि. | ऋग्विधानम् |
| 4. य.सा.भा.भू | यजुर्वेदीयसायणभाष्यभूमिका |
| 5. तै.आ | तैत्तिरीयारण्यकम् |

## सहायकग्रन्थसूची


| ग्रन्थनाम | सम्पादकः |
|---|---|
| 1. संस्कृतनिबन्धशतकम् | पद्मश्री डा कपिलदेवद्विवेदी |
| 2. ऋग्विधानम् (कन्नडा) | डा.नारायणाचार्यः |
| 3. कृष्णयजुर्वेदसायणभाष्यम् | श्रीपादसूनुः नारायणशर्मा |
| 4. मनुस्मृतिः | गिरिजाप्रासाद् द्विवेदी |


## अन्त्यटिप्पणी -

1. हितोपदेशः 1, 25.
2. म.स्मृ 2.6.13
3. य.सा.भा.भू.
4. म.स्मृ 2.168
5. तै.आ. 2
6. ऋ. वि. 11
7. ऋ.वि 13
8. ऋ.वि.16
9. ऋ.वि.22
10. स.र.भा.
11. ऋ.वि.44
12. म.स्मृ 1.21

* * * *

# सामवेदीयवेदव्रतानां वैशिष्ट्यम्

**अतिथि - अध्यापकः अक्षय अशोक कुलकर्णी ***

सामवेदः षड्जादिसप्तस्वरैः-जात्यादिसप्तस्वरैः- आयतादिश्रुत्यादिभिर्युक्तः गायनप्रधानवेद इति सर्वश्रुतः। अस्य वेदस्य सहस्रशाखाः आसन्निति महाभाष्ये इत्थं वर्णितम् - **'सहस्रवर्त्मा सामवेदः'**[1] इत्यनेन ज्ञायते यत् सहस्रशो गानविधयो गानप्रकारा वा आसन्निति। एतादृश-गायनबाहुल्यवेदो न केवलं गानेऽप्रसिद्धः, अपि तु अग्निष्टोमादियागेषु- मोक्षादिकाम्यप्रयोगेषु- विवाहादिसंस्कारेषु - कृच्छ्रादिप्रायश्चित्तप्रयोगेषु च। वेदस्यास्य अस्ति महती प्रसिद्धिः । एतेषां प्रयोगाणां संरचना सामवेदीयाष्टब्राह्मणेषु कृता वर्तते ।

श्रौतयज्ञप्रयोगाणां वर्णनं ताण्ड्यमहाब्राह्मणे अभिहितम् । तथा च काम्यं एवं प्रायश्चित्तादिप्रयोगाणां वर्णनं सामविधानब्राह्मणे उपदिष्टम्(दृश्यते) । स्मार्तादीनां संस्कारप्रयोगमन्त्राणां वर्णनं छान्दोग्यमन्त्रब्राह्मणे कृतम् । तत्र छान्दोग्यमन्त्रब्राह्मणे संहितापरक स्वररहितमन्त्राणां संकलनं दृश्यते । तेषां मन्त्राणां विनियोगस्तु सामगृह्यसूत्रैः कृतः । अधुना गोभिल-कौथुम-खादिर-जैमिनीति चत्वारि सामगृह्यसूत्राणि लभ्यन्ते । तानि क्रमशः कौथुमी-राणायनी-जैमिनीशाखासम्बन्धितानीति । तेषु गृह्यसूत्रग्रन्थेषु नित्यनैमित्तिकसंस्कारादिकर्माणि उपदिष्टानि । तत्रत्येषु संस्कारेषु वेदव्रतानीति अन्यतमानि । प्रायेण सर्वत्र व्रतशब्दः

**"Shevadhih"**, Research Journal of Sri Venkateswara Vedic University, Tirupati. ISSN: 2229-4031, Email: shevadhih@gmail.com Vol-13, 1st & 2nd issues - January to December 2021, Vol-14, 1st & 2nd issues - January to December 2022, Pages.74-85.

* श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपतिः E-mail: sridvivedi@gmail.com

काम्यप्रयोगार्थमेव उपयुज्यते। किन्त्वत्र संस्कारत्वेन सूचितम्। वेदानाम् तत्तत्संहिताभागाध्ययनारम्भे समाप्तौ च स्वशाखासूत्रोक्तरीत्या क्रियमाणं कर्म वेदव्रतसंस्कारेण ज्ञायते । तत्र माणवको अष्टमे वर्षे उपनयनसंस्कारं प्राप्य षोडशवर्षे गोदानपर्यन्तं गुरोस्सकाशात् मूलपाठविद्यां प्राप्नोति । तस्मिन्कालेऽ द्वादशवर्षं ब्रह्मचर्यं चरित्वा अवशिष्टेषु वर्षेषु चत्वारि व्रतानि अनुष्ठेयानि भवन्ति ।

इमानि व्रतानि मूलपाठमनुसृत्य प्रतिवेदं प्रतिशाखं च भिद्यन्ते । तत्र ऋग्वेदे, होतार, औपनिषद-शुक्रिय-गोदानाख्यानि चत्वारि व्रतानि दृश्यन्ते । तथैव यजुर्वेदे, प्राजापत्य-सौम्य-आग्नेय-वैश्वदेवव्रतानीति । सामवेदे तु गोदान-व्रातिक-आदित्य-महानाम्नीव्रतानि मुख्यत्वेन दृश्यन्ते । तत्र खादिरगृह्यसूत्ररुद्रस्कन्दीयभाष्ये अष्टौ व्रतानि सूचितानि । तदेवम्- **अष्टौ व्रतानि स्मर्यन्ते छन्दोगानाम् । उपनयनम्, गोदानम्, व्रातिकम्, आदित्यम्, महानाम्निकम्, औपनिषदम्, भौतिकम्, ब्रह्मसामव्रतमिति**[2] । तत्र कालप्रतिपादकसूत्रे ज्येष्ठसामिकव्रतनाम्ना व्रतमेकमतिरिक्तेन सूचितम्- **"गोदानव्रातिकादित्यव्रतौपनिषद्ज्येष्ठसामिकास्संवत्सरा:"**[3]। इति । तदाहृत्य नवव्रतानि जायन्ते । तत्र तरुणाग्निहोत्रिकारिकायामपि अष्टव्रतानाम् अन्ते समित्क्षेपणं सूचितम्। तदेवम् – कृत्वेहोपनयादिष्टव्रतान्ते समिदिष्यते (त.हो.का.202)

तत्र सामवेदीयप्रकृतिपाठमधिकृत्य सप्तसामगानानि सन्ति । तेषु प्रथमगानं गायत्रसाम्ना ज्ञायते । अत: उपनयनव्रतमपि वेदव्रतत्वेन गृहीतम् । तत आग्नेय-ऐन्द्र-पवमानेति द्वितीयतृतीयचतुर्थगानार्थं गोदानव्रतम् । अर्क-द्वन्द्व-व्रतपर्वेति पञ्चमगानार्थं व्रातिकव्रतम् । शुक्रियपर्वेति षष्ठगानार्थम् आदित्यव्रतम् । महानाम्नीपर्वेति सप्तमगानार्थं महानाम्नीव्रतम् इत्यादि उपनयनादिमहानाम्नीषु पञ्चव्रतेषु सप्तगानानां संकलनं कृतमिति दृश्यते । अतस्तान्येव वेदव्रतसंस्कारत्वेन गृहीतव्यानि । अन्यानि व्रतानि काम्यव्रतानीति ।

तेषु उनिषद्व्रतं प्रायेण सर्वत्र लभ्यते । तदर्थमेव आदित्योपनिषद्व्रतयोर्मध्ये कुत्रचित् उपनिषद्व्रतं विकल्पेन, कुत्रचित् आदित्यव्रतं विकल्पेन प्रतिपादितम् । खादिरगृह्यसूत्रे आदित्यव्रतं विकल्पेन एवमुक्तम्- "**नादित्यव्रतमेकेषाम्**"[4] इति । वामनकारिकायां उपनिषद्व्रतं विकल्पेन इत्थं सूचितम्- '**तत्रादित्यव्रतं यदि न कुर्यात्, पाक्षिकत्वेन कुर्वीतोपनिषद्व्रतम्**'[5] इति । अत: मूलपाठरूपकशुक्रियाणां षष्ठगानार्थम् आदित्यव्रतमेव संस्कारत्वेन स्मर्तव्यं न त्वौपनिषदमिति। किन्तु तत्र गोभिलोक्तस्य "**गोदानिकव्रातिकादित्यव्रतौपनिषदज्येष्ठसामिकाः संवत्सरा:**"[6] इत्यस्य सूत्रस्य व्याख्याकारेण आदित्यव्रतमुपनिषद्व्रतं च अध्यापननियमे एकस्मिन् व्रतेऽत्र संगृहीतम् । तदेवम्- "**केचनाब्दा: आदित्यव्रतोपनिषदा: स्यु:, अत्र आदित्यव्रतसाम्नामुपनिषद्ब्राह्मणस्य चानुशील: प्रधान: कर्तव्यः**" इत्यनेन छान्दोग्योपनिषद: छान्दोग्यमन्त्रब्राह्मणस्य च अध्यापनं व्रतान्वितमिति ज्ञायते । उच्यते खलु '**मन्त्रब्राह्मणयोर्वेद नामधेयम् इत्याचक्षते**'[7] इत्यत: तेषामध्ययनमपि सव्रतेन सूच्यते ।

तत्र महानाम्नीव्रतं कालबाहुल्यरूपंत्वात् गोभिलगृह्यभाष्ये काम्यत्वेन सूचितम् । तदुक्तं- '**इमे च काम्यव्रतसाधना द्वादशादिका अब्दा: गोदानिकषोडशाब्दितोऽतिरिक्ता ज्ञेया:**'[8] इति । कानिचन व्रतानि गोदानिकषोडशवर्षात् पूर्वमाचरणीयानि भवन्ति । तान्येव वेदव्रतेन संस्कारत्वेन च ज्ञायन्ते । तत्र द्वादशवर्षीयमहानाम्नीव्रतं संस्कारत्वेन कृतं चेत् षोडशवर्षे गोदानम् असाध्यं भवति । अतो गोदानं कृत्वा काम्यत्वेन महानाम्नी व्रतमाचरणीयमिति । एवं भौतिक-ब्रह्मसाम-ज्येष्ठसामव्रतमपि काम्यत्वेन न तु संस्कारत्वेनेति।

जैमिनिगृह्यसूत्रे आदौ व्रतत्रयमुक्त्वा आदित्यव्रतं विकल्पेन प्रतिपादितम् । तदेवम्- "**गौदानिकव्रातिकौपनिषदा: संवत्सरा:...**"[9] इत्यत्र ज्येष्ठसामिकं विहाय अन्यानि व्रतानि कथितानि। आदित्यव्रतम् अन्यदाचार्यमतेन स्वीकृतं वर्तते । तदुक्तम्- "**अन्यत्राचार्यवचनाद्व्रातिके व्रतपर्व आदित्यव्रातिके शुक्रियाणीति**"[10] इति। ततो महानाम्नीव्रतमपि उपदिष्टं वर्तते इति ।

**सामवेदीयवेदव्रताचरणकाल:**

यद्यपि वेदव्रतानां गौणकाल: वार्षिकमुहूर्तकालो वा न कुत्रापि प्रतिपादित:। तथापि उपनयनप्रभृति केशान्तसंस्कारपर्यन्तेषु षोडशवर्षेषु कुत्रचित् कर्तव्यमिति (तरुणाग्निहोत्रिकारिकायां दृश्यते। तदेवम् – **व्रतान्ते षोडशे वर्षे गोदानां कर्म चौलवत्** (त.का.200)) दृश्यते । तत्र जैमिनिना वेदब्रह्मचर्यस्य काल एवमुक्तः- **'द्वादशवर्षाणि वेदब्रह्मचर्यं जननात्प्रभृत्येके यावदध्ययनं वा'** अत्र उपनयनत: षोडशवर्षेषु द्वादशवर्षमिति जैमिनिमतम् । किन्तु केचन जननात्प्रभृति, अध्ययनान्तं वा कथयन्तीति । तत्र षोडशवर्षेषु द्वादशवर्षं ब्रह्मचर्यं चरित्वा शिष्टेषु चतुर्वर्षेषु व्रतचतुष्टयं समापितव्यमिति ज्ञातुं शक्नुम: । एतेषां व्रतानामाचरणं मूलप्रकृतिपाठानां कृत एव भवति। षडङ्गानामध्ययनं गोदानात्परत: समावर्तनान्तं व्रतरहितेन कर्तव्यम्। द्वादशवर्षीयमहानाम्नीव्रतमपि तस्मिन् काल एव युज्यते । तदुक्तं गोभिलगृह्यभाष्ये षोडशवर्षादारभ्य समावर्तनान्तकाले - **द्वादशादिका अब्दा: गोदानिकषोडशाब्दितोऽतिरिक्ता ज्ञेया:**"[11] इति । वेदाध्ययनस्य प्रथमकालरूपसोपानं गोदानकरणम् । द्वितीयकालरूपसोपानं समावर्तनमिति वक्तुं शक्नुम: । तत्रैव स्नातकस्तरीयविद्या स्नातकोत्तरस्तरीयविद्या च भिद्यते इति ।

**वेदव्रताचरणस्य समयावधि:**

यथा व्रतेषु भेदाः वर्तन्ते तथैव व्रताचरणकालेऽपि कुत्रचित् स्थले भिन्नत्वं दृश्यते । तत्र ऋग्वेदीयानां कृते होतृपनिषदो: व्रतकालौ एकैकवर्षात्मकौ भवत:। शुक्रियस्य दिनचतुष्टयम्, गोदानस्य च द्वादशदिनानि। अस्य गोदानस्य समाप्ते: ऊर्ध्वं मुण्डनं भवतीति । कैश्चिदस्य प्रयोगस्य केशान्त इति नामकरणं कृतं वर्तते । यजुर्वेदीयव्रताचरणं काण्डादौ काण्डसमाप्तौ च वर्तते । तत्र आब्दिककालविषये वर्णनं नोपलभ्यते ।

सामवेदीयव्रताचरणकालस्तु ऋग्यजुर्वेदीयव्रताचरणकालापेक्षया अधिकतमा भवति। गोभिलेन गोदानं-व्रातिकम्-आदित्योपनिषद्-ज्येष्ठसामिकव्रतानि सांवत्सरिकानीति प्रोक्तानि ।

महानाम्नीव्रतं तु द्वादशवर्षसाध्यमिति । तस्मिन् नवषदत्रीणीति विकल्पत्रयं सूचितम् । यस्य पित्रादिभिः त्रिभिः सव्रतमहानाम्नी अधीताश्चेत्, तद्वातिकस्य आचरणकालः सांवत्सरिकत्वेन सूच्यते। तत्र खादिरेणापि गोदान-व्रातिकं-आदित्य-उपनिषद्-ज्येष्ठसामिकव्रतानि एकैकसांवत्सरिकाणीति सूचितानि । महानाम्नीकालस्तु गोभिलवदेव सूचितः ।

जैमिनिगृह्यसूत्रेऽपि गोदान-व्रातिक-उपनिषद्व्रतानि एकैकसांवत्सरिकानीति उपदिष्टानि । महानाम्नीकालस्तु गोभिलखादिरवच्चोक्तः । तत्र सांवत्सरिकस्य विकल्पनियमे, त्रिभिः पित्रादिभिः श्रुतस्थले केवलं पिताश्रुतनियमः सूचितः ।

**सामवेदीयव्रतानां सामान्यप्रयोगाः**

राणायनीकौथुमशाखीयानां चतुर्षु व्रतारम्भकालेषु उपाकर्माचरणमुक्तम् । तस्मिन् यज्ञोपवीतस्य विसर्जनम् । ततः स्थण्डिलादि इध्माज्ञाहुतिपर्यन्तं पुरस्तात्तन्त्रम् । शिष्यकरग्रहः समस्तव्याहृतेः हवनम् । शिष्येण "अग्ने व्रत" इत्यादिभिः पञ्चभिर्मन्त्रैः हवनम् । व्रतादौ पञ्चसु मन्त्रेषु आचरिष्यमाणव्रतनाम संयोजनम् । व्रतान्ते आचरितस्य व्रतस्यनाम ग्रहणम् ।

जैमिनीशाखीयानां कृते तु वेदाध्यापनार्थम् उपक्रमस्य योजनम् । प्रतिव्रतादौ नूतनानि मेखलोपवीतादीनि धारणानि । एकदेशे अग्निप्रणयनम् । परिसमूहनम् । अग्न्यलंकरणम् । शिष्यम् उपनयनवत् उपवीतीनं वासः परिधापनम् । मौञ्जीत्वग्दण्डसहितं शिष्यस्योपवेशनम् । परिषेचनम् । अग्नेव्रत इत्यादिभिः चतस्रः समिधः क्षेपणम् । पर्युक्षणम् । तत्रोक्तमन्त्रेषु आचारिषं-आचरितमिति ऊहः करणम् । इति ।

**सामवेदीयव्रतानां विशिष्टप्रयोगाः**

कौथुमराणायनीयगोदानादिव्रतानां विशिष्टप्रयोगाः- चौलतन्त्रेण वपनम् । दक्षिणायाम् अजं केशखनित्रां गां च प्रदानम् । नालङ्करणं न नववस्त्रधारणम् । स्थण्डिलादि भैक्षान्तम् उपनयनवदाचरणम् । भैक्षादिकार्येषु प्रतिव्रतादौ मेखलासूत्रं दण्डं च त्यक्त्वा नवधारणम् । यथोक्तमध्यापनम् । उपनयनस्यैव विसर्जनम् । विहितसामश्रावणम् । इति गोदानम् ।

आदित्यव्रतप्रयोगे तु उपाकर्म । सदैव स्नानरहितेन वसनम् । तमनन्तर्हितं नीलोक्तवस्त्रधारणम् । नीलोपवीतिनं च । यथोक्तमध्यापनम् । व्रातिकस्यैव तद्व्रतस्य विसर्जनम् । यथोक्तश्रावणम् । इत्यादित्यव्रतम् ।

महानाम्नीव्रतस्य विशिष्टप्रयोगः- सदैव कृष्णभोजनं । तत्र खादिरगृह्यसूत्रे रुद्रस्कन्दीयवृत्तौ कृष्णभक्षविषये एवं दृश्यते- **"नीरसाहारः अपक्वहारो वा"**[12] इति सुपक्वमन्नं सुसम्यगन्नं चेति विचारेण रहितं यत् लभ्यते तद्भुञ्जीत । गोभिलगृह्यसूत्रभाष्येऽप्येवमेव लभ्यते- **"कदर्याकदर्याविचारणैवान्नादिक भक्षणीयम्"**[13] इति । सदैव कृष्णवस्त्रस्य परिधानञ्च।

जैमिनिगृह्यसूत्रे कृष्णवस्त्रस्थले शुक्लवस्त्रधारणादिनियमाः उपदिष्टाः। तदेवम्- **"ब्रह्मचर्यं चरेच्छुक्लैकवासा व्रतं तु भूयस्तिष्ठाविथासीत नक्तं तस्य कृष्णे भोजनाच्छादने भवत इत्येक शुक्लं चैव परिदध्याद्रागदोषान्न कृष्णम्"**[14] इति कृष्णवस्त्रधृतेन तमो तमो गुणस्य उत्पत्तिः भवति । गुणाद्रागदोषस्सञ्जायते। तस्माद्विमुक्त्यर्थं शुक्लवस्त्रस्य परिधाननियमं वैज्ञानिकदृष्ट्या सूचितम् ।

**सामवेदीयवेदव्रतानां अध्यापनश्रावणविषयः**

गोदानव्रताचरणसमये सप्तप्रकृतिगानेषु द्वितीयतृतीयचतुर्थगानपाठनार्थमादौ 'अग्न आयाहि' इत्यादि 'अपामिवान्तं' संहितामन्त्राः अध्यापनीयाः। ततः आग्नेय-ऐन्द्र-पावमानानि च सामपर्वाणि क्रमात् अध्यापयेत् । पूर्णे संवत्सरे सति व्रतोत्सर्जने तान्येव सामानि श्रावणीयानि । अशक्तश्चेत्पर्वाद्यसामानि अन्तिमानि च श्रावणानि । एवं च सोमँ राजानं-इत एते-सपूर्व्यः- अभित्रिपृष्ठं चैतानि प्रायश्चित्तसामानि श्रावणीयानि ।

ततो द्वितीयादित्यव्रताध्यापनसमये सप्तप्रकृतिगानेषु पञ्चमगानपाठनार्थमादौ 'इन्द्रज्येष्ठम्' इति मन्त्रादारभ्य 'सुप्रपाणा इह स्ता' इत्यन्तं मन्त्रभागमध्याप्य अर्कद्वन्द्वव्रतपर्वाणि अध्यापयेत् । व्रतोत्सर्जने तान्येव पर्वाणि श्रावणीयानि । अशक्तत्वात् पर्वाण्याद्यन्तानि च सामानि श्रावणीयानि । व्रतान्ते गोदानवत् सोमँ राजादि अभित्रिपृष्ठपर्यन्तानि सामानि श्रावणीयानि ।

तृतीयादित्यव्रताध्ययने सप्तप्रकृतिगानेषु षष्ठगानपाठनार्थमादौ 'अग्न आयूँषि' इत्यत: 'शोचिष्केशं विचक्षण:' पर्यन्तमन्त्राणाम् अध्यापनमुपदिष्टम् । एवं च शुक्रियपर्वस्थसामाध्यापनम् । व्रतोत्सर्जने शुक्रियाणां साम्नां श्रावणम् । तत: सोमँ राजादीनि श्रावणीयानीति ।

**महानाम्नीव्रते अध्यापनश्रावणयोर्विशेषनियम:**

महानाम्नीव्रते सप्तप्रकृतिगानेषु सप्तमगानपाठनार्थमादौ **एवाह्यसि** इत्यत: महानाम्नीपर्वान्तम् पर्वान्तम् ऋग्भागः भाग:, तत्सामभागा अध्यापनं सूत्रग्रन्थकारै: सूच्यते । अध्यापनविधौ पूर्वं गुरु: एकवारम् ऋच अध्यापयति । तदेव शिष्य: अनुवदति। ततस्सामान्यपि पूर्ववदेकैकवारं सपुरीषपदेन सहोक्त्वा प्राग्वदन्तिमेऽपि ऋचाम् योजनम्। एवं प्रकारेण पाठ्यक्रमोऽयं, व्रतसमाप्तिदिनपर्यन्तं सूचितः। प्रतिदिनम् एकवारमेव विधिरयम् न ततो अधिकमिति । व्रतोत्सर्जनेऽपि मन्त्रपूर्वकं सपुरीषमहानाम्नीसामोक्त्वा सामान्ते मन्त्राः श्रावणीयाः।

तत्र गोभिलेन जलस्पर्शेन जलदृष्टेन च अस्य व्रतस्य अध्ययनोपक्रमम् एवं दर्शितम्- **"वर्षन्तं ब्रूयादाप: शक्वर्य इति । विद्योतमानं ब्रूयादेवँ रूपा: खलु शक्वर्यो भवन्तीति । स्तनयन्तं ब्रूयान्मह्या महान् घोष इति । न स्रवन्तीमतिक्रामेदनुपस्पृशन् । न नावमारोहेत् । प्राणसँशये तूपस्पृश्यारोहेत् । तथा प्रत्यवरूह्य । उदकसाधवो हि महानाम्न्य इति"**[15] इति गोभिलेन महानाम्नीव्रतम् उदकव्यवहारेणैव साधनीयमिति स्पष्टीकृतम्।

तत्र जैमिनिनाऽपि एवमेवोपदिष्टम् - **"सर्वास्वप्सूपस्पृशेदभुक्ता: शक्वर्य इति नावा न प्रस्नायात्प्राणसंशये तूपस्पृशेदुभयत अपि वा गा: पाययेत्पशुक्ता: शक्वर्य इति वर्षं नान्तदधीत छत्रेण प्रतिवर्षं निष्क्रामेत्"** इति नावमारोहणे प्रायश्चित्तं विहितम्, यत् शक्वर्योच्चारणसमये एकवर्षं गा: पालयेदिति । ततः प्रतिवर्षं वर्षतौ वर्षजलं न स्पृशेत् । सदा छत्रेण सह बहिर्निष्क्रामयेदिति।

तत्र गोभिलेन द्वादशवर्षेषु कालांशप्रकारेण अध्ययनकाल: सूचित:। तदेवम् - **"तृतीये चरिते स्तोत्रीयामनुगापयेत् । एवम् इतरे स्तोत्रीये । सर्वा वाऽन्ते सर्वस्य"**[17] इति द्वादशवर्षादि विहितकालेषु यावत्कालं व्रतमाचरितव्यं भवेत् । तस्य तृतीये अंशे प्रथमाम् स्तोत्रीयां अध्यापयेत्। अध्ययनारम्भत: तृतीयांशे द्वितीयाम् अध्यापयेत् । द्वितीयाध्ययनारम्भतस्तृतीयांशे तृतीयामध्यापयेत् । अथवा सर्वा: स्तोत्रीया: व्रतान्ते एकत्रेणैव अनुगापयेत् । इति ।

व्रतोत्सर्जनात्पूर्वदिने उपोषिताय परिणद्धाक्षाय शिष्याय पूर्वोक्तविषयम् अनुगापनम् । तस्मिन्दिने स: दिवा तिष्ठेत् रात्रावासीत[18]। एवमेव गोभिलेन अभुक्ताय नेत्रबद्धशिष्याय अध्यापनम् एवमुक्तम्- **"उपोषिताय सम्मीलितायानुगापयेत्"**[19] इति । तत: शिष्यहस्तयो: सर्वौषधीनां कांस्यपात्रनिनयनं, वस्त्रवेष्टनम्। तदुक्तम्- **"कांसमपां पूरयित्वा सर्वौषधी: कृत्वा हस्ताववधाय प्रदक्षिणमाचार्य्योऽहतेन वसनेन परिणह्येत्"**[20] सर्वौषधीभि: कांस्यपात्रधृतशिष्यस्य प्रदक्षिणेन वस्त्रबन्धनं कार्यम् । इदमेव तस्य सम्मीलनमिति नामान्तरम्। विध्यनुगतमुपवासाय विध्यनुगतं बद्धनेत्राय ब्रह्मचारिणे तिस्र: शक्करीस्तोत्रीया: गुरु: अनुगापयेदिति। तत्र खादिरेणापि एवमेवोक्तम्- **"उपोषिताय परिणद्धाक्षायानुगापयेत्"**[21] इत्यत्र सम्मीलनशब्दप्रयोगो न कृतः।

व्रतोत्सर्जने दिने श्रेय:पर्यन्तसामभाग: श्रावणीय। रुक्मयुक्तजलपूर्णं कांस्यपात्रं निधाय श्रावणविषयं श्रावयेदिति। गोभिलेन तु रुक्मयुक्तस्थले सर्वौषधीभि: जलपूर्णस्य कांस्यपात्रस्य शिष्यहस्तयोर्निधानमुक्तम्[22]।

जैमिनिमतेन तु व्रतस्यान्ते शिष्य: वनं गत्वा तत्राहोरात्रं उपवसेत् । गुरु: प्रात:काले नववस्त्रेण सह वनं गत्वा तत्र तं शिष्यं सशैवलजलकांस्यपात्रेण सह निमीलितमुपवेशयेत् । शिष्यं स्पृशन् ऋक्पूर्वं पुरीषसहिता: सिमा: उपगायेत्। तदुक्तं जैमिनिसूत्रे- **"ब्रह्मचर्यान्त एकरात्रमुपोषित अरण्यं गत्वा शैवलमिश्राणामपां कांसं पूरयित्वा तमुपवेश्य समनुपरिगृह्य निमीलितं तिस्र स्तोत्रीया उपगायेत्सपुरीषा"**[23] इति ।

श्रावणान्ते पञ्चाहुतीनां हावनादि वामदेव्यगानान्तं कृत्वा वेष्टितवासोऽन्मुच्य माणवकं वस्त्ररहितेन नेत्रेण "अपोऽभिव्यख्यम्" इत्यनेन अप: वीक्षयेत् । "ज्योतिरभिव्यख्यम्" अनेन अग्निं दर्शयेत् । "पशूनभिव्यख्यम्" सन्निहितं वत्सं वीक्षयेत् । "सुरभिव्यख्यम्" इत्यादित्यं वीक्षयेदिति । तत: शिष्यस्य वाङ्नियमं विसृज्य । दक्षिणायां वत्सं, उष्णीषवस्त्रं, गां, रुक्मयुक्तकांसपात्रं च प्रदद्यात् । ब्राह्मणभोजनं चेति ।

जैमिनीयगृह्यसूत्रोक्तव्रतोत्सर्जनम्- **"श्वो भूतेऽरण्यं गत्वाग्निमुपसमाधाय वत्समुपान्वानीये वास उद्वेष्टयेदुद्यम्य कांसमपोऽभिवीक्ष इति वीक्षेत्स्वरभिवीक्ष इत्यादित्यं ज्योतिरभिवीक्ष इत्यग्नि पशुमभिवीक्ष इति वत्सं समन्यायन्तीत्यप: प्रसिच्य"**[24] इति । ततो गृहं गत्वा पूर्वतन्त्रान्ते श्रुतचरुणा आहुतिद्वयं जुहुयात्। आहुतिदेवताद्वयं जैमिनिना एवं सूचितम्- **"स्थालीपाकाद्विश्वाहमित्रेन्द्रौ"**[25] इति हुत्वा महानाम्नीश्च तृतीयाहुतिः सूचिता **महानाम्नीश्च यजत"**[26] इति । तद्धुत्वा व्रतान्ते समित्क्षेपणम् । स्विष्टकृत: । कांस्यपटैस्सह गां वत्सं, दक्षिणायां दत्वा रसवन्मिष्टमन्नेन गुरुं भोजयेदिति ।

**व्रतस्य फलवैशिष्ट्यम्**

वस्तुतस्सर्वेषां वेदपाठिनां कृते सव्रतवेदाध्ययनं तत्तत्सूत्रकारैरनिवार्यं कृतम् । किन्तु कालान्तरेण कुत्रचिदेव अस्यानुसरणं दृश्यते । अद्यतनकाले न केवलं व्रतरहितेन अध्ययनाध्यापनं प्रचलति अपि तु व्रतानुसारेण यदध्ययनक्रमो वर्तते तमपि नानुसरन्ति । सहपाठिन: न सन्तीति वशात् शिष्यस्य पवमानेन-आरण्यकेण वा वेदारम्भो बहुत्र प्रचलति । तेन अध्येत्रा व्रतलोपपातकेन अध्ययनक्रमदोषपातकेन च संलग्न्यते । तस्माद्विमुक्त्यर्थं पुन: पाहित्रयोदशकादिप्रायश्चित्तानि कर्त्तव्यानि भवन्ति । तथैव व्रतान्वितेनाध्ययनं क्रियते चेत् कीदृशफलभाग्भवतीति बौधायनगृह्यसूत्रे एवं वर्णितम्- **"यन्मातु: दुरितं तस्मादेनं त्रायत.."**[27] इति मात्राकृतपापकर्मणा संलग्न्यपातकात् विमुक्त्यर्थं वेदव्रतानि चरितव्यानि । ततो **"स एष चरति दशपूर्वान् दशापरान् आत्मानं चैकविंशतिं पुत्रापौत्रादींश्च पुनाति । यस्मा उपदिशति यस्याम्**

**उपविशति यस्मै ददाति यस्माच्च प्रतिगृह्णाति तत्सर्वं पुनाति**"[28] । इत्यनेन व्रतान्वितेनाध्ययनेन व्रातिकस्य वंशशुद्धिरात्मशुद्धिश्च जायते । तेन दशपूर्वान् पितृन् दशापरान् पुत्रपौत्रादीन्, आत्मानं, स्वपरितपी:, शिष्यान्, स्थलान्, आदानप्रदानवस्तूनि शुद्ध्यन्ते ।

व्रतरहितेनाध्ययनेन वेदमन्त्राणां यातयामत्वम्, असिद्धत्वं च न भवति । तैर्मन्त्रैर्यत्कर्म कुरुते तत्सर्वमपि सिद्धिकारकं भवतीति । अत: विहितवेदव्रतानि अवश्यं चरणीयानि । तत्र गोदानव्रतं संहितास्थमन्त्रसाम्नां सिद्ध्यर्थं चर्यते । व्रातिकं अर्कद्वन्द्वव्रतस्थसाम्नां सिद्ध्यर्थम् । आदित्यव्रतं शुक्रियपर्वस्थसाम्नां सिद्ध्यर्थम् । महानाम्नीति द्वादशवर्षस्य व्रतं महानाम्नीपर्वस्य सिद्ध्यर्थम् । इतोऽपि महानाम्नीव्रते तु विशिष्टफलं प्रोक्तं वर्तते ।

**महानाम्नीव्रतस्य फलवैशिष्ट्यम्**

समग्रसंसारोऽयं जलाधीन: इति वयं सर्वतश्श्रुण्म: । पर्जन्येनैव जीवस्योत्पत्तिरिति उपनिषदि कथितमेव । तत्कारणात् बहुभिर्विद्वद्वरेण्यै: वर्षप्राप्त्यर्थं पर्जन्ययागादिप्रयोगा: कल्पिता: वर्तन्ते । तत्र यज्ञेनैव पर्जन्य: इति छान्दोग्योपनिषदि इत्थं सूचितम्- '**तस्मिन्नेतस्मिन्नग्नौ देवा: सोमँ राजानं जुहोति । तस्या आहुते: वर्षं संभवति**'[29] इति । तत्र भगवद्गीतायामपि कृष्णेन एवमुक्तम्-

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भव:।**
**यज्ञाद्भवति पर्जन्य: यज्ञः कर्मसमुद्भव: ।।**[30]

अत: सप्तसोमयागपर्जन्ययागादियज्ञानां सदाचरणेन वरुणदेवता प्रसन्ना भूत्वा पर्जन्यरूपिवर्षं यच्छति इति सर्वत्र श्रुति: । किन्तु तत्पर्जन्यरूपिवर्षाय सदा सर्वदा स्वाधीने कर्तुं योग्यतासिद्धि: महानाम्नीव्रतेनैव लभ्यते । तदुक्तं गोभिलेन- "**एवं खलु चरित: कामवर्षी पर्जन्यो भवति**"[31] व्रतमिदं युक्तं पाणौ धृतजलेन, जलव्यवहारादि यथोक्तप्रकारेण आचरिते, तेन यदा यदा वर्षा कामयते तदा तदा वर्षा प्राप्नोतीत्यर्थ: । एवमेव जैमिनिनापि- "**एवमस्य चरत: कामवर्षी**

**पर्जन्यो भवति**"[32] इति । तत्र सामवेदीयशाखान्तरे व्रताचरणस्य मतान्तरं दृष्ट्वाऽपि फलविषये मतैक्यं दृश्यते। अनेनैव ज्ञायते यत् सर्वेषां ग्रन्थकाराणां मार्गाणां भिन्नत्वेऽपि अन्तिमलक्ष्यम् एकमेवेति । इति सामसूत्रग्रन्थानुसारेण विशिष्टकर्मफलं विलिख्य विरमामि । इति ।

## अन्त्यटिप्पणी -

1. व्याकरणमहाभाष्यम्
2. खा.गृ.सू.पृ.८३
3. खा.गृ.सू. २.५.१७
4. खा.गृ.सू.२.५.१८
5. वा.का. ४००
6. गो.गृ. ३.१.२८
7. बो.ध.सू.२.६.२
8. गो.गृ.भा. ३.२.२
9. जै.गृ.सू. १.१६
10. जै.गृ.सू. १.१६
11. गो.गृ.भा. ३.२.२
12. खा. गृ. २.५.२४
13. गो. गृ. ३.२.१०
14. जै.गृ. १.१७
15. गो. गृ. ३.२.१६-२३

16. जै.गृ. १.१७
17. गो. गृ. ३.२.२६-२८
18. वा. का. ४५३
19. गो.गृ.३.२.२९
20. गो.गृ.३.२.३०
21. खा. गृ. २.५.२९
22. गो.गृ.३.२.३०
23. जै.गृ. १.१७
24. जै.गृ. १.१७
25. जै.गृ. १.१७
26. जै.गृ. १.१७
27. बो.गृ. ३.२.६३
28. बौ.गृ. ३.३.२९,३०
29. छा.उ.५.५.२
30. भ. गी. ३.१४
31. गो. गृ. ३.२.२४
32. जै.गृ.१.१७

* * * *